joy, and despair that has been recorded in the Meghadūta. Its simplicity of idiom declares its sublime resolution of worldly vicissitudes into the transcendent, wordless peace of love's realm.

## Women in Kālidāsa's Plays

Kālidāsa's plays show the diversity of the mind of the 4th century man whose understanding of the human condition is extended beyond his own sex and beyond his own time. Because he is genius, because he could hear the words of women and transform them into language on the stage, because he did not filter these words through the screen of contemporary male prejudices, he was able to present vibrant, alive women. Shakuntalā's uniqueness lies in its portrait of a young girl who remains strong during her swift growth to womanhood. It is not proper to regard women in Kālidāsa's plays as less than whole, less than characters whose dramatic stature must be examined from their own vantage point and in their own right.

## The Privileged Playgoers of Kālidāsa

Assumptions about the nature of Kālidāsa's audience go hand in hand with ideas about the quality, scope, and even meaning of his dramas. When Kālidāsa was viewed as unpolished genius in British period, his audience were equally primitive in their responses. After independence Kālidāsa thrives in the same milieu as any living great dramatist of India, even then the matter of Kālidāsa's audience is a problem in economics, demographics, and social practices.

# 4.1. महाकविः श्रीकालिदासः*

शृङ्गारं पद्मया यः प्रथयति करुणं दैत्यपुत्रेण हास्यं
वक्राकारेण वीरं रिपुवधविधिना सिंहवेषेण रौद्रम्।
बीभत्सं रक्तजर्या (?) शममपि मनसा भीतिमप्यट्टहासैः
स्तम्भोत्पत्त्याद्भुतं नः स नवरसमयः श्रीनृसिंहः पुनातु।।

उपन्यासप्रारम्भः।

सहृदयाः! विदितमेवेदं भवतां यदाधुनिकैरुपदिश्यन्ते बहुविधाः पन्थानो विद्याध्यापनविषये। अवश्यपठितव्यविद्यानिर्णये च महान्खलु विवादः। श्रेष्ठानां पुरातनीनां भाषाणामवश्यपठितव्यतां प्रति सुमहत्तरः खलु विवादः समुपलभ्यते लोके। केचित्तु हूणविद्वांसः प्रकृतानुपयुक्तपुरातनभाषाध्ययनमनवश्यं पश्यन्ति। भारतीयानां तु संस्कृतं ह्यादिभवा भाषा। यदियं साधारणेष्वालापेषु हिन्दुजनैर्नोपयुज्यते तदेनामलौकिकीं व्याहरन्ति। मन्दादरः खलु भवति संस्कृतभाषायामद्य हिन्दुजनः। अभिनवागतवधूविलोभितमनाः प्राकृतजन इव जननीं हिन्दुजनोऽपि हूणभाषाध्ययनलोलुपः सम्प्रति न गणयति संस्कृतभाषाम्। पुरा खलु भूसुराः सर्वेऽपि वृद्धपरम्परया निखिलशास्त्राण्युपलभ्य बहुश्रुताः परिचयमत्र बहुशो विदधिरे। यतः संस्कृत-भाषाज्ञानमेव जीवनोपायस्तेषां समजायत। किन्त्वद्य वृत्तयो बहुधा प्रवृत्ता येन विरलमजनि स्वभाषाध्ययनम्। कादाचित्कानि खलु संस्कृतभाषाप्रशंसनानि कस्यचिदपि साधोर्मुखाच्छ्रूयन्ते तानि खल्वरण्यरुदितानि भवन्ति।

संस्कृतं ह्यनेकभाषाणामाधारभूता भाषा। तर्कमीमांसादिमतविषयेष्वनयैव भाषया व्यवहारः साम्प्रतमपि वर्त्तते। व्याकरणं च सम्पूर्णं पदकोशोऽस्याः। ग्रन्थाश्च बहवो विद्यन्ते न्यायादिशास्त्रेषु काव्येषु च। ते खलु साधुलमाः। परम-महनीयसम्पदस्ते ग्रन्था बह्वीरप्यापदो विदेशीयैस्तुरुष्कादिभिरुत्पादितास्सन्तीर्य मुद्रणयन्त्राभावेऽपि परम्परयाप्यचिरादागताः करतलमस्माकम्। अहो प्रभावः पूर्वेषां यदविनश्वरपरिपालिता एते। इत ऊर्ध्वं न कदाचिदपि विनश्येयुरिति निश्चयेन वक्तुं शक्यम्। हिन्दुदेशे तु बहोः कालादेकत्र लीनं संस्कृताभिधं ज्योतिः समस्तशब्दब्रह्ममूलभूतमिति मत्वाऽऽहत्य परिशीलनेन यूरोपीयैर्विस्तरं महान्तमापादितमतीव तद्देशेषु रोचते।

एषा खलु भाषा हिन्दु (धात्र?) जनानामवरेष्वपि पर्वसु नियतमध्यापयितव्या। अभिरुचिश्च तन्मनसि कथमपि समुत्पादयितव्या। विद्याग्रहणं हि न केवलं स्वोदरपूरणाय किन्तु स्वदेशोपकारकशिल्पपरिज्ञानाय। अतः सर्वैरपि भाषेयमध्ययितव्या।

संस्कृतज्ञानं हि हिन्दुदेशीयस्य शिथिलयति नितरामन्यभाषावगमनप्रयासम्। इयं मद्भाषेति वक्तुं नैकस्यामपि भाषायामयमाप्नोति कौशलम्। अत एव नैव शक्नोति लब्धुं वाक्स्वातन्त्र्यम्। अतः प्रामिडादिभाषाग्रहणे उपकार-कत्वात्संस्कृतमेव सर्वथा तेन पठितव्यम्। किं च गृह्येषु कर्मसु संस्कृतज्ञानमावश्यकं हिन्दुदेशीयस्य ब्राह्मणस्य। प्रतिदिनं क्रियमाणं हि सन्ध्यावन्दनादिकं कर्म तद्भाषायामेव विद्यते। ततो मताभिमानिभिर्नितरामवगन्तव्येयं भाषा।

विविधाः खलु शैशवादारभ्य कृताः संस्काराः संस्कृतभाषयैव विहिताः। एतेऽपि यदि न परित्याज्याः सम्यगर्थावगमनेन कर्तव्याः। अस्माकं मुख्यतमं विवाहादिकं कर्म तद्भाषयैव विधीयते। सर्वमपि संस्कृतभाषया कुर्वस्तदर्थमज्ञात्वा मूक इव जनो न याति परिहास्यतामित्याश्चर्यम्।

एवमादिभिः कारणैः संस्कृतज्ञानमावश्यकमतस्तल्लाभाय ग्रन्था बहवः पठितव्याः। तत्र कालिदासकृता एव श्लाघ्यतमाः। तत्पठनाय प्रयतन्तां सहृदयाः।

---

* विषयमेतमधिकृत्यास्मद्विरचितोऽपि विद्यतेऽन्यः प्रबन्धः। स च प्रकाशितेऽस्मिन्प्रकाशयिष्यतेऽस्माभिः। (सहकारिसम्पादकः) संस्कृतचन्द्रिका (कोल्हापुर) खण्ड 7, संख्या 5-9, 11-12, जुलाई 1899—मार्च 1900 पर्यन्तम्।

अत: परं कोयं कालिदास: कवि: के च ग्रन्थास्तत्प्रणीता इति विचारयाम:।

सहृदया:! कवीनामग्रेसरोऽयं कालिदासनामा महाकविराबालस्थविरमस्मिन्देशे विदितवैभवो युरोपादिदेश-विस्तीर्णयश:पटलो भवद्भिरपि सम्यग्विदितगुणगणोऽपि मया समुपश्लोकित: साम्प्रतमानन्दमनवधिमुत्पादयेद्वश्चेतसीति समुपन्यस्यते तद्गतमधिकृत्य वृत्तान्तजालम्। लोके हि विचित्रं महतां चरितं समुल्लासयति विबुधमनांसि। यथोच्यते कविवरेण भट्टबाणेन।

**साधूनामुपकर्तु लक्ष्मीं धर्तु विहायसा गन्तुम्।**
**न कुतूहलि कस्य मनश्चरितं हि महात्मनां श्रोतुम्।।** इति।

तत्र प्रथमं महानुभावस्य कविपुङ्गवस्यास्य चरितमुपवर्ण्यते। पुरा खलु मालवदेशमध्युवास कश्चिद्ब्राह्मणयुवा। अविज्ञातलोकतन्त्रो गोरक्षणेन कलयामास लोकयात्राम्। तस्मिन्देशे काचिद्विद्वत्तमा कन्या विवाहार्थं पित्रा समानीतान्पात्रीभूतान्द्विजान्वादविचारेण पराजिग्ये। एवमागत्यागत्य तस्या: सकाशाद्विचारे पराजयभीत्या प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभीत्येतरे वरा यदा नैवागन्तुमैच्छंस्तदा तत्पित्रा विचाराभावेनैवागतमात्राय कन्या देयेति प्रतिज्ञाते पूर्वपूर्ववरानयने निष्फलप्रयत्नतया जातेर्ष्या दूता: पुनर्वरानयनार्थं चोदिता: स्वावलम्बिनीं शाखां छिन्दन्तमेनं युवानमपश्यन्। दृष्ट्वा चैष एवाल्पबुद्धिस्तस्या: पण्डितंमन्याया अनुरूपो वर इति निश्चित्य बलादेनं भीत्या सङ्कुचितशरीरं तत्सकाशमानिन्यु:। अनयोश्च निर्वृत्ते पाणिग्रह एनमरसिकमत्तकुलशिखामणिं ज्ञात्वा सा विदुषी तं रहस्याहूय गच्छ वनमनतिदूरस्थं यत्र खलु कालीदेव्या: कश्चनालयो विद्यते। तत्र देवीमाराध्य विद्यामवाप्य पुनरागच्छेति गृहान्निष्कासयामास। स विप्रो मनसि खेदं वहन्यथोक्तं काननमेत्य कायक्लेशादिभि: कथमपि देवीमाराधयामास। देवी च दीनदयालुस्तमेकस्मिन्नहनि प्रणतमुत्थाप्य भो भूसुर अद्य प्रसन्नाहं सर्वाऽपि विद्या ते स्फुरतु गच्छ यथेष्टमित्यभिधायान्तर्बभूव। सोऽपि सन्तुष्ट: प्राप्तसकलसारस्वतविभव: पुरं गत्वा पाणिगृहीत्या भवनद्वारि तिष्टन् अनावृतकपाटं द्वारं देहि इत्युक्तवान्। सा तु तच्छ्रुत्वा स्वपतिरित्यवधार्य अस्ति कश्चिद्वाग्विशेष इति तमुच्चै: पृष्टवती। सोऽपि तथेत्युक्त्वा गृहान्त: प्रविश्य तत्रैव **अस्त्युत्तरस्यां दिशि देवतात्मेत्यारभ्य** कुमारसम्भवं महाकाव्यं **कश्चित्कान्तेत्यादिना** मेघदूतं **वागर्थाविवसंपृक्ता-वित्यादिना** रघुवंशमहाकाव्यं च प्रणिनाय। पश्चात्तत्प्रणीतान्ग्रन्थान्विलोकयन्त: पौरा: परमं विस्मयापन्नास्तद्वृत्तान्तमखिलं ज्ञात्वा कालिदास इति नाम्ना तत: प्रभृति तमाजुहुवु:। महादेव्या: काल्या: प्रसादाल्लब्धविद्यत्वात्कालिदास इति नाम। संज्ञात्वादेव रित्यनुशासनात्पूर्वपदस्य ह्रस्वत्वमुपपद्यते। अत: परमेवोज्जयिनीं गत्वा श्रीविक्रमार्कसभामलंचकार। तत्र विविधै: कविवरै: पूजितो राज्ञा बहुमतश्च चिरमुवासेत्यैतिह्यम्।

एष खलु वृत्तान्तो न विश्वसनीय:। कालिदास इत्यस्य कवेर्नाम। अस्याद्भुततमां कवितां वाग्विलासं च दृष्ट्वा विस्मितैस्तदनन्तरं समागतैर्जनैरुपनिबद्धेयं विचित्रा कथेत्याशयोऽस्माकम्। सर्वथाऽयं कविवरो मेधावी रामायणादि-पूर्वग्रन्थपठनेनैव संस्कृतभाषाकौशलमवापेति न लेशतोऽपि सन्देह:।

अत: परमस्य कवे: कालनिर्णय: कर्तव्य:। इदमपि न निश्चयेन वक्तुं शक्यम्। एतै: कारणैरयं विक्रमादित्यकाले न्यवसदिति केचिन्मन्यन्ते।

* ज्योतिर्विदाभरणाख्ये स्वीयग्रन्थे स कविरेवमुक्तवान्—

**मत्तोऽधुना कृतिरियं सति मालवेन्द्रे**
**श्री विक्रमार्कनृपराजवरे समासीत्।** इति।

---

* ऐतिह्यमिदमयं च कालनिर्णय: सुप्रसिद्धतमै: पण्डितप्रवरै: श्रीतारानाथतर्कवाचस्पतिपूज्यपादै: स्वप्रणीताया मालविकाग्निमित्र-व्याख्याया भूमिकायां हृदयङ्गमतयोपनिबद्ध इति स० सम्पादक:।

एते च श्लोकास्तन्मतमेव द्रढयन्ति

धन्वन्तरिः क्षपणकामरसिंहशंकुवेतालभट्टघटखर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य।।
यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी।।
शङ्क्वादिपण्डितवराः कवयस्त्वनेके ज्योतिर्विदः समभवंश्च वराहपूर्वाः।
श्रीविक्रमस्य बुधसंसदि प्राज्यबुद्धे स्तैरप्यहं नयसखः किल कालिदासः।।
काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं जातं यतो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव।।
वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ संमिते
मासे माधवसंज्ञकेऽत्र विहितो ग्रन्थक्रियोपक्रमः।। इति।।

एतैर्ज्योतिर्विदाभरणं कालनिर्णयशास्त्रं तेनैव महाकविना प्र ीतं तदपि विक्रमादित्यकाल एवेति वक्तुं शक्यम्। किं च अष्टषष्ट्युत्तरत्रिसहस्रसंख्यके कलेरद्बवृन्दे याते तद्ग्रन्थकरणं सुव्यक्तम्। तेन इतः पूर्वं ह्यधिकनवशतोत्तरैक-सहस्रपरिमिताद्वर्षगणात् पूर्वं ज्योतिर्विदाभरणं ततः पूर्वं च रघुवंशादिकमभूदिति प्रतिभाति। एतत्सन्दर्भैर्यद्यपि दृश्यकाव्यकरणं न प्रतीयते तथापि दृश्यकाव्यानां ज्योतिर्विदाभरणग्रन्थात्पश्चात्काले विहिततया न तत्र समुल्लेखः। किन्तु तत्तद्ग्रन्थे प्रस्तावनायां सुव्यक्तमेव तत्प्रणीतत्वम्। एवं च क्रिस्तजन्मतः प्राक् प्रथमशतके तत्कालमुद्घोषयन्ति खलु ते विद्वांसः।

अपि तु वक्ष्यमाणैः कारणैः क्रिस्तजननात्पूर्वं कालिदासो न बभूवेति शक्यं निरूपयितुम्।*

**रत्नानि वै वररुचिर्नव विक्रमस्येति** विक्रमशब्देन शकाब्दोत्पादकः श्रीविक्रमार्कनृपतिरेवोच्यत इति कथं निर्णेतुं शक्यते। अनेके खलु नृपतयो धारयन्ति विक्रमनाम। सर वुइलियम् हंटरोऽपि अयमन्यतम उपाधिः अर्थः खल्वस्य विक्रमआदित्यः पराक्रमे सहस्रदीधितिसम इति। अतश्च हिन्दुदेशीयैर्विजयिभिर्नृपतिभिरयमसकृद्धार्यत इति मन्यते। किं च विद्यते परम्परागता काचिद्वार्ता यथा मालवभूपतिर्भोजराज एव विक्रमस्तस्यैव सभायां नवरत्नान्यभवन्निति। अयं भोजः क्रिस्तीयैकादशशतक आसीदिति प्रतीयते केनचिच्छिल्ललेखेन। केचिदत्र तन्नाटके राजसेवकत्वेन यवनिकाप्रसङ्गात् तस्यानतिप्राचीनतां दर्शयन्ति। तत्र विद्यमाना प्राकृतभाषाऽपि तमेवार्थं द्रढयति। कविकालनिर्णयादिषु प्रसिद्धो बीवरनामा कश्चिद्विद्वान् कालिदासस्य क्रिस्तीयचतुर्थशतकमेव काल इति स्वीकरोति। इग्लिङ् नामा कश्चिदपरो विद्वान्पञ्चाशदधिकपञ्चशततमे वत्सरे तस्य जीवनकालमुद्घोषयति। अत एव बहुभिर्बहुधा चिन्तितवात्तस्य महात्मनः कालनिर्णयोऽत्यसुकरः संवृत्तः। किन्तु तन्नाटकादिग्रन्थपरिशीलनपरैरस्य वाक्पाटवं रचनावैदग्ध्यं वृत्तिसौष्ठवमर्थगौरवं चालोक्य भट्टबाणभवभूतिभट्टनारायणराजशेखरादितः प्रसिद्धात्कविवर्गात्प्रागेव तस्य काल इति स्पष्टमुदीर्यते निःशङ्कमुपपाद्यते च।

परन्तु तद्ग्रन्थाः समालोच्यन्ते

साम्प्रतं कालिदासकृतिरिति व्यवहृता ग्रन्थास्त्वेते—

रघुवंशं कुमारसम्भवं मेघदूतमभिज्ञानशाकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रं स्मृतिचन्द्रिका ज्योतिर्विदाभरणं नलोदयमृतुसंहारं श्रुतबोधं कविकण्ठपाशं श्यामलादण्डकं वृत्तरत्नावली नलहरिश्चन्द्रीयं चेति। एतन्मध्ये रघुवंशं कुमारसंभवं मेघदूतमिति काव्यत्रयं शाकुन्तलं मालविकाग्निमित्रं विक्रमोर्वशीयमिति नाटकत्रयं च तेनैव महाकविना प्रणीतमिति अनितरसाधारणेन सर्वत्रैकयैव रीत्योपलभ्यमानेन वाङ्माधुर्येण रीतिविशेषेण च स्पष्टतरमवगम्यते। इतरे खलु ग्रन्था न तेन प्रणीता इत्यर्थमाधुर्यादिगुणाभावेन तत्पठनशीलैः सुकाममवबोद्धुं शक्यम्।

* एतन्मतखण्डनं चास्मद्विरचिते प्रबन्धे प्रकाशयिष्यते। स० सम्पादकः।

तत्र प्रथमं कुमारसंभवं समालोच्यते।

एष तु कविना प्रथमे वयसि प्रणीतः प्रथमतरो ग्रन्थः। काव्यमिदंहरपार्वतीविवाहवर्णनात्मकम्। तत्रैवं विप्रतिपद्यन्ते। केचित्त्विदं सप्तदशसर्गावधि तारकासुरवधपर्यन्तं कालिदासेनैव प्रणीतमिति मन्यन्ते। अपरंत्वष्टमसर्गपर्यन्तमेव तेन कृतमिति। अत्र च परामर्श उत्तर एव ज्यायान्।[1] व्याख्यातृपुङ्गवेन मल्लीनाथेनाष्टमसर्गावध्येव व्याख्यातम्।

कौमुद्यां भट्टोजीदीक्षितेन—

**शार्वरस्य तमसो निषिद्धये नूनमुन्नमति यज्वनां पतिः**
**पुण्डरीकमुखि पूर्वदिङ्मुखं कैतकैरिव रजोभिराहतम्।।**

**इति कालिदास** इति कालिदासकृतत्वेन प्रदर्शितम्। उणादि—वृत्तावुज्वलदत्तेन तु **रवः प्रगल्भाहतभेरिसंभवः** इति कुमारसम्भव इति उत्तरभागस्थितत्वेन कुमारसंभव इति प्रोक्तं न तु कालिदास इति।

अन्यच्च नवमसर्गप्रभृति किल काव्यं न पूर्ववत्प्रशस्ततमं कालिदासान्यूनेनैव च केनापि कविना कृतमिति शैलीविचारणेन सुकरमवगन्तुम्। दृश्यतां सहृदयैरयं श्लोकः पञ्चदशे सर्गे—

**संग्रामं प्रलयाय सन्निपततो वेलामतिक्रामतो**
**वृन्दारासुरसैन्यसागरयुगस्याशेषदिग्व्यापिनः।**
**कालातिथ्यभुजो बभूव बहलः कोलाहलः क्रोशनः**
**शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिम्भरिः।।** इति।

एवमनेका नीरसाः श्लोका विद्यन्ते।

अस्मिन्खलु काव्ये रतिविलापः पार्वतीपरमेश्वरसंवादस्तद्विवाहवर्णनं च सहृदयहृदयेषु नितरां प्रमोदमभिवर्षन्ति।

अथ मेघदूतम् सर्गद्वयघटितमिदमतिसुन्दरम्। रसस्तु शृङ्गारः। रचना तु मन्दाक्रान्तावृत्तघटिता नितान्तमानन्दमुत्पादयति। सुस्थानकल्पितयतिविन्यासैः परस्परमैत्र्युपगतैरिववर्णैः समुपचितनिर्भररसनम्र इव मन्दं मन्दं नुदन्ति प्रत्येकं श्लोकाः।

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः।**
**गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः।।**

इति श्लोकेन काव्यगुणान्कविः स्वयमेव प्रकटयति।*

यथा मन्दं मन्दं नुदतीत्यनेन मृदुवर्णानां प्राशस्त्यं अनुकूल इत्यनेन पदानां मैत्रीभावं नदतीत्यनेन ध्वनियुक्तत्वं मधुरमित्यनेन द्राक्षापाकवत्वं सगन्ध इत्यनेनाह्लादकतां च सगन्ध इत्यनेन सकृत्पठनमात्रेण मनोमोहनत्वं नयनसुभगमित्यनेन प्रतिपाद्यस्यार्थस्य पुरोवर्तित्वम्। एतेन काव्यस्य सर्वेन्द्रियाह्लादकत्वं प्रथमं लक्षणमिति प्रकारान्तरेण प्रपञ्चयति सकौशलमेष कविप्रवरः।

रघुवंशम्—अस्मिन्खलु काव्ये भूयिष्ठानि रसवन्ति नीतिप्रतिपादकानि धर्मबोधकानि वस्तुस्वभाववर्णनानि च समाकर्षन्ति निभृततरमखिलविबुधचेतांसि। कविरप्यत्र पूर्वकृतैर्ग्रन्थैरस्तमितशब्दतृष्णोऽर्थप्राधान्यसमासक्तचित्तः करिष्यमाणस्य काव्यस्य तादृशं गौरवमुद्भावयन्नादौ मङ्गलश्लोकेन

---

1. श्रीतारानाथतर्कवाचस्पतिमिश्रास्तु नैतदनुमन्यन्ते। तदेतत्प्रपञ्चयिष्यते प्रबन्ध आस्माके। स० सम्पादकः।
* नेदं मन्यतेऽस्माभिः।

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।** इत्यनेन

समप्रधानेऽपि शब्दार्थेऽर्थस्य परमेश्वरदृष्टान्तवर्णनेन शब्दस्य स्त्रीदृष्टान्तवर्णनेनार्थमेव प्रधानतरं मन्यत इति सुस्पष्टं दृश्यतां विबुधैः। साकेतनगरस्य वर्णनमिन्दुमतीवियोगप्रयुक्तराजविलापवर्णनमिति नितरामास्वाद्यम्।

अतः परं शाकुन्तलादिनाटकानि समालोचयामः। शाकुन्तलं हि सर्वेषां नाटकानामुपरि वर्तत इति न वो न विदितम्।

शाकुन्तलम्—

**भाषाणां संस्कृता* भाषा कथ्यते प्रथमा बुधैः।**
**कालिदासो महाकीर्तिस्तत्कवीनां पुरःसरः।**
**तत्प्रणीतेषु काव्येषु श्रेष्ठं शाकुन्तलं विदुः।।**
**तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम्।**
**यास्यत्यद्येति तत्रापि श्लोकः सर्वमनोहरः।।**

कविः शाकुन्तले प्राचीनैर्बहुधोपलक्षितानि नाटकलक्षणानि प्रायशोऽनादृत्य **यथेष्टं रसोत्पादकमेव पन्थानमाश्रयति। कथासन्दर्भश्च नितरां रमणीयः दुर्वासःशापप्रदानवृत्तान्त इन्द्रेण दुष्यन्तस्याह्वानमित्यादिसन्दर्भाः श्लाघनीयाः सर्वेषामपि हृदयमाकर्षन्ति। शेक्सपीयरवत् नीचप्रभृतिसर्वोत्कृष्टपात्रान्तं तत्तद्योग्याचारभाषाप्रकटने कौशलमधिकं दर्शयति कविः। शृङ्गाररसवर्णने खल्वप्रतिभटः कविरेषः। वीररसं तु नैवं वर्णयितुमलम्। अत्र भवभूतिर्विशिष्यते। सर्वत्र खलु कालिदासः कोकिलामञ्जुभाषणमेवाभिप्रैति। न तु शिवाघोरस्वनम्। अत एव वीररसे वर्णयितव्येऽपि।

**एष त्वामभिनवकण्ठशोणितार्थी**
**शार्दूलः पशुमिव हन्मि चेष्टमानम्।**
**आर्तानां भयमपनेतुमात्तधन्वा**
**दुष्यन्तस्तव शरणं भवत्विदानीम्।।** इति।

मृदूनेव वर्णान्प्रयुङ्क्ते। विविधमृगीकुलसङ्कुलमाश्रमपदं परमरमणीययुवतिभूयिष्ठं राजकुलं च वर्णयितुं साध्वेष एव शक्नोति महाभागः। अस्मिन्नाटके न कुत्रापि विरसो व्यर्थो वा संलापः। मितं च मधुरं भाषणम्। प्रतिपात्रमाधीयते यत्नः। सर्वत्राप्यन्यूनरसमाधुर्यमानन्दयति नायिकाशरीरमिव कथाशरीरं सहृदयचेतांसि। एष किल ग्रन्थः पुनः पुनरपि पठ्यमानः **सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवोऽयमक्ष्णोः।** इत्युक्तप्रकारं नवनवः प्रतिभाति। सर्वथा जयति सर्वविषयकूलङ्कषा मतिरस्य महानुभावस्य। कथं वा शक्यते नाटकस्यास्य महिमानमपरिमेयं वर्णयितुम्। स्वयमेवासकृत्पठित्वा सहृदयाः काममवधारयेयुरिति कृतं पल्लवितेन।

मन्त्रिणा सह मन्त्रव्यापारं निश्चित्य राजा तत्तदुचितकार्येषु तदुचिताञ्जनान्नियुञ्जीत।

शाकुन्तले तु विदूषको राज्ञो वयस्यमात्मानं निर्दिशंस्तस्य मृगयालोलुपत्वं निन्दति। न सर्वथा व्यवसायमभिलष्यति। त्वरयति नगरगमनाय राजानम्। मोदकखादने निरवधिः प्रीतिरस्य विप्रस्य। सर्वमप्युपमानमभ्यवहारविषयकमेव व्याहरति यथा पिण्डखर्जूरैरुद्वेजितस्येत्यादि। नाटके चात्रास्य माढव्य इति नाम। भयप्रकृतिरयं जनो राक्षसानां नामापि श्रोतुं नोत्सहते। राजा सर्वमपि वृत्तान्तं कथयित्वा चपलोऽयं बटुः कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेदिति **परिहासविजल्पितं**

---

* नैर्ङ्गरी इति मूलं परिवर्तितमस्माभिः।

** न चेदं दृष्टं शाकुन्तलं हि प्राचीननाटकलक्षणान्यनुसरति।

**सखे परमार्थेन न गृह्यतां वचः** इत्यन्ततो निजगाद। विदूषकोऽपि तं तथैव गृहीतवान् विषयम्। अत एवैष राज्ञो वयस्योऽपि न राज्ञः साहाय्यं वितनोति। किंच विदूषकोऽयं मृत्पिण्डबुद्धिरिति अनेन दण्डकाष्टेन कन्दर्पव्याधिं नाशयामीति कथनेन स्पष्टीक्रियते।

मालविकाग्निमित्रे तु विदूषकः शाकुन्तलवन्नाकृतसाहाय्यः। किन्तु प्रियतमाघटने महान्तमुद्यमं करोति। स नाटकाभिनयदर्शनच्छलेन तां दर्शयितुं कौशिक्या सह गूढं परामृश्य हरदत्तगणदासयोर्नैपुण्यविषये परस्परस्पर्धामुत्पाद्य कलहं कारयित्वा राजसमीपं तौ निर्णयार्थमानयति। किंच राज्ञः प्रार्थनां मालविकासखीं बकुलावलिकां श्रावयित्वा यथा राज्ञा सह मालविकाया मेलनं भवेत्तथोपायं चिन्तयामास। पुनरपि मालविकायां कारागृहे निक्षिप्तायां तदुद्धारायात्मनो हस्ते केतककण्टकेन च्छेदं कृत्वा सर्पदंशत्वेनापदिश्य च राज्ञो राज्ञ्याश्च समीपे विषवेगं प्रकाश्य राज्ञ्या हस्तात्सर्पविषापहारकं मणिं लब्ध्वा तां मोचयित्वा ततो निभृतं प्रमदवनं नीत्वा राज्ञासमं मालविकां मेलयति। इत्यादिभिर्नानाविधैरुपायैरिष्टार्थसिद्धिं लम्भयति। नितान्तकुशलस्तत्र विदूषकः।

विक्रमोर्वशीये तु मालविकाग्निमित्र इव न सहायो भवति। मूढमतिः सन् रहस्योद्घाटनं कुरुते। राज्ञः सेवक इव तन्नियोगं कुर्वाणो न स्वमत्या किञ्चिदपि कलयत्येषः। अत्रापि स्वस्तिवाचननिमन्त्रणादीन्परमभिलषति। एवं नाटकत्रयेऽपि भिन्नगुणो विदूषक इत्यवगन्तव्यम्।

कालिदासकृतिष्वेव विदूषकपात्रं नितरां प्रशस्यते न त्वितरासु। ये खलु पिपठिषवः कालिदासनाटकानि तत्तद्भाषणचेष्टादीन्सम्यगवधार्य मनसि विशेषांस्ते जानीयुरिति मन्ये।

ततस्तस्य कविप्रवरस्य शैलीविशेषः समुपवर्ण्यते।

सर्वत्रापि वैदर्भीमेव रीतिमाश्रयति महाकविरेषः। वैदर्भी रीतिस्तु—

> **बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता।**
> **नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते।।**

किंच—

> **श्लेषः प्रसादः समता माधुर्यं सुकुमारता**
> **अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।**
> **इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः।।**

इति दण्ड्याचार्यः

लक्ष्यमिदं दृश्यताम्—

> **अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-**
> **रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।**
> **अखण्डं पुण्यानां फलमिव च तद्रूपमनघं**
> **न जाने भोक्तारं कमिह समुपस्थास्यति विधिः।।**

द्राक्षापाको रचना या सुदृश्या। लक्षणं तु

> **द्राक्षापाकस्तु कथितो बहिरन्तः स्फुटद्रसः।।** इति।

यथा—

> **सरसिजमनुविद्धं शैवलेनापि रम्यं**
> **मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।**

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्।। इति।।

वृत्तिश्च कैशिकी। तल्लक्षणं तु

अत्यर्थसुकुमारार्थसन्दर्भा कैशिकी मता। इति।।

यथा–

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः।। इति।

किञ्च–

हठादाकृष्टानां कतिपयपदानां रचयिता
जनः स्पर्धालुश्चेदहह कविना वश्यवचसा।
भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ
घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः।।

इत्युक्तप्रकारं कालिदासो वश्यवागेव। न पुनर्हठादाकृष्टानां पदान् रचयिता। एवमादयो बहवो गुणा वर्तन्तेऽस्य रचनायाम्।

साधूक्तं भट्टबाणेन यथा

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते।। इति।

सर्वेष्वपि प्रायशो वृत्तेषु तस्य विद्यन्ते श्लोकाः। किन्त्वार्यारचनायां न कोऽपि प्राचीनो नवीनो वा कविः कालिदासादतिरिच्यते। न किल भवभूतिरपि तथार्या विधातुमलम्। यथा

कास्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्।।

उपमालङ्कारप्रयोगे च कालिदासो नितरां विशिष्यते। अत्र च बहून्युदाहरणानि। तत्र दिङ्मात्रं यथा–

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन्।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि हातुम्।। इति।

सर्वथा यद्यल्लोके रमणीयं तत्तत्सर्वं कालिदासवचःस्वित्युपसंह्रियते विषयः।

कालिदासगिरां सारं कालिदासः सरस्वती।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः।। इति।

प्रोक्तं खल्वेतन्महामहोपाध्यायेन कोलाचलमल्लिनाथेन।

किं च कविरयं रामायणमसकृत्पठित्वा तद्गतं सारांशमवगम्यादिकविवद्वचलोल्लासं विहितवान् इति स्पष्टमुपलभ्यते। अयमप्यपर आदिकविरिति संमाननीयो महानुभावः समस्तैर्लोकैः।

महाकाव्यकरणेनैव यद्यपि महाकविरिति नाम सम्भवति तथाऽप्यप्राकृतगुणसम्पन्नोऽयमन्वर्थमेव धारयत्युपाधिमिमम्।

अतः परं तन्मतं निरूप्यते–

एष किल परमेश्वरभक्तः शैव इति तत्तकाव्यगतैः सम्यङ्निश्चीयते मङ्गलश्लोकैः। यथा–**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ। या सृष्टिः स्त्रष्टुराद्या। वेदान्तेषु यमाहुरेकपुरुषमित्यादि।**

तस्य गुणास्तत्कृतग्रन्थेभ्यः परिज्ञायमाना इदानीं वर्ण्यन्ते–

कविरयमविकत्थनो महानुभावः। अन्यनाटककवय इव न स्वयमेवात्मगुणाञ् श्लाघते। भवभूतिप्रभृतयस्तु कवयः प्रस्तावनायां स्वस्यैव गुणान्प्रकटीकुर्वन्ति। यथा महावीरचरिते **वश्यवाचः कवेः काव्यमिति।**

किन्तु कालिदास आपरितोषाद्विदुषां न साधु मन्यते स्वीयं विज्ञानम्। सन्तः परीक्ष्यान्यतरद्भजन्त इति सतामेवाशयं बहुमन्यते। परिहरति च स्वीयमहङ्कारम्–

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्।** इति च।

अविकत्थनत्वमेव परमं गुणं मन्यते। वक्ति खलु रघुवंशे–

**उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।** इति।

सत्स्वपि बहुषु गुणेष्वविकत्थनत्वमेव वर्णयति। एवमादयो बहवो गुणा अमुष्य तत्तद्ग्रन्थेभ्य उपलभ्यन्त इत्यलं पल्लवितेन।

**एतत्तत्कविसार्वभौमफणितेर्माधुर्यमन्यादृशं**
**सारासारविवेकशौण्डधिषणा जानन्ति न प्राकृताः।**
**ज्ञातुं तत्सुमनोहरं सुमनसां भूयस्तरां सौरभं**
**भृङ्गा एव भवन्ति काननचरा नान्ये मृगाणां गणाः।।**

इति शिवम्।

मेलक्कोट्टयूर
**कविभूषणश्रीरङ्गनाथाचार्यस्य।**

# 4.2 महाकविः कालिदासः*

—अप्पाशास्त्रि राशिवडेकर

विशुद्धललिताकारा गुणालङ्कारशालिनी।
ललिता भारती यस्य स एवैकः प्रतिष्ठितः।।

अयि प्रियमहाभागाः संस्कृतचन्द्रिकासुहृदः विचार्यतां तावत्किं वा निःसारतममप्येतं संसारसागरमवतीर्णस्यादिमं कर्तव्यं मनुष्यस्येति नूनमेवं विचारयन्तः प्रतिपद्येरन्भवन्तो यद्येन केनाप्युपायेनामरत्वसाधनमेवेति। दृश्यते ह्येतदर्थमेव प्रवृत्तिर्महताम्। एतदर्थमेव च क्रशयन्ति दुरुत्तराणां तपसामाचरितेन देहान्मुनयः। एतस्यैवाभिलाषेण बहुलक्लेशायाससाध्या अनुष्ठीयन्ते ज्योतिष्टोमादयो यागाः। अस्यैवाशया परित्यज्यते वैषयिकं सुखं प्रज्ञैः। एतस्यैव लिप्सया विविधहिंस्रश्वापदसमाकुलमतिभीषणं काननं समाश्रीयते। किमधिकमेतदेवाधिगन्तुमविगणितशरीरपातं प्रयतन्ते पुरुषाः। किन्तु प्रत्यूहजालजटिलान्येव भवन्ति प्रायः श्रेयांसि कर्माणि। अत एव च नैतदाश्चर्यं यत्तत्तादृशानन्तरायान्विरलतमा एवोत्तरन्ति विरला एव चामर्त्यभावं विन्दतीति। किन्तु विद्यतेत्रापर एव कश्चिदुपायो येनाकल्पान्तमप्यासाद्यतेऽमर्त्यत्वम्। यमेव खल्ववलम्बमाना महात्मानोऽपरित्यज्यापि सुखं वैषयिकमननुष्ठायापि विपुलपरिश्रमसाध्यान्यागादीनपरितप्यापि तपोऽनाश्रित्यापि काननममरभावमधिगच्छन्ति। स चोपायो नाम भगवत्या वाग्देवताया वशीकारः। वशीकृतवाग्देवीका हि पुरुषा न केवलं स्वयमेवासादयन्त्यमरत्वमपि तु यं यमभिलष्यन्ति तं तमपि पुरुषं तथाविधं वितन्वन्ति। प्रकृतिसहजं प्रतिभानं सुनिर्मलं विपुलतरं च श्रुतं मन्देतरश्चाभियोग इत्येतेऽभ्युपाया वाग्देव्या वशीकारस्य। विरलेष्वेव किल पुरुषसत्तमेषु प्रादुर्भवत्येतत्सम्पत्तिः। यत्र चासीदेवंविधाया उपायसामग्र्या अक्षीणत्वं तेष्वेव कविप्रवरेष्वन्यतमः प्रधानश्च महाकविस्तत्रभवान् कालिदासो नाम।

मुकुटमणिरयं भारतीयकविप्रकाण्डानामलङ्करणं भारतवर्षस्य प्रतिष्ठितस्तम्भः पूर्वपुरुषयशः पताकानाम्। एष खलु लीलालयो वाग्देवीविलासस्य निष्पत्तिस्थानमशेषरससुधानिस्यन्दानां निलयोऽलङ्कारजालस्य संस्थानधरणिर्वैदग्ध्यस्य प्रभव उदारत्वस्यालम्बनं मृदुमधुरपदमनोरमाया वैदर्भ्या आकरः पीयूषसारसरसानां काव्यरत्नानां सहस्रांशुर्दोषध्वान्तपटलस्य विहारभूमिश्च विविधगुणनिकरस्येति।

एवंविधस्य चार्यवंशपुण्यपुञ्जस्य महात्मनोऽवस्थितिसमयमवबोद्धुमवगन्तुं चास्य चारित्रं कस्य वा नोत्कण्ठते हृदयं रसिकस्य। एवं विधानां हि सुगृहीतनाम्नां चरितावबोधेन तीर्थजलप्रक्षालितमिव सुनिर्मलत्वमुपयात्यन्तः करणं मूषिकानलध्मातेव सुवर्णशलाका सुदूरं विजहाति मालिन्य बुद्धिः अनवरतजलासारसिक्तेव वीरुदुपयाति पल्लवित्वं प्रतिभा प्रावृट्पयोधरसमुदयेनेव च वैदूर्य वैदग्ध्यमङ्कुरीभवति।

न खल्वेतन्न विदितं विदुषां यद्दुरुन्नेयं एव प्रायेणावस्थितिसमयः प्राचीनानामिति। एते ह्यबहुमन्यमाना इवात्मनो गुणनिचयं नैवोल्लिखन्ति प्रायः स्वीयेषु प्रबन्धेषु तन्निर्माणावसरं विशेषतश्च काव्येषु। अत एवैतेषां तत्तत्प्रबन्धगतैर्विशेषैरेव निर्णीयते समयोऽवस्थानस्य। तन्नैतदाश्चर्य यत्प्राचीनतमो विनीतप्रवरश्च कालिदासः स्वीयेषु प्रबन्धरत्नेष्वात्मनोऽवस्थितिसमयं नालेखीत्। सन्ति पुनरेतस्यावस्थानसमयनिर्णये कियन्तिचित्साधनानि। तैश्चास्य समयं निर्णेतुमिच्छन्तो भूयांसो विद्वांसो वहुधा विप्रतिपद्यन्ते। अतो यावच्छक्यं निराकृत्य तेषां विप्रतिपत्तीः स्थिरीकर्तुमिच्छामः समयं महाकवेः कालिदासस्य।

1. तत्र केचिदर्वाचीना वैज्ञानिकप्रवरा महाकविप्रकाण्डममुं ख्रिस्तीयशकस्य सप्तमशताब्द्यामुद्भूतं प्राहुः। नैव पुनरत्र कश्चिद्धेतुर्दृष्टः। मतं त्वेतदेकान्ततोऽसमञ्जसमिति ब्रूमः। चतुस्त्रिंशदुत्तरषट्शतमिते हि ख्रिस्तीयवत्सरे श्रीरविकीर्तिना

* संस्कृतचन्द्रिका (कोल्हापुर), 1900 ई०

प्रणीते पुलाकेशिनाम्नि प्रबन्धे श्रीमतः कालिदासस्य प्रशंसा दृष्टा। न च भाविनः कवयो भूतेन प्रशस्यन्ते। अतः सिद्धं तत्रभवतः कविचूडामणेः श्रीकालिदासस्य सप्तमशताब्द्याः पूर्वमेव प्रादुर्भूतत्वम्।

### अथ नवरत्नविचारः

2. अथोच्यते कैश्चित् अवबुध्यते किल–

**धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः।**
**ख्यातो वराहमिहिरो नृपतेः सभायांरत्नानि वै वररुचिर्नवविक्रमस्य।।**

इत्यादिभिः प्राचीनैः पद्यैस्तन्मूलिकाभिश्चाप्तानां वदनेभ्यः श्रूयमाणाभिः कथाभिः श्रीमद्विक्रमार्कनृपसभायां धन्वन्तरिप्रमुखानि नवरत्नान्यासंस्तत्रैव चाभवत्कालिदासोऽपीति नवरत्नान्तर्भूतश्च श्रीमान्वराहमिहिरः ख्रिस्तीयषष्ठशताब्द्यां दिवं जगामेति प्रमाणान्तरैर्विशदीभवति। ततश्च तन्मित्रत्वाच्छ्रीमान्कालिदासोऽपि षष्ठशताब्द्यामेव प्रादुर्बभूवेति शक्यं विनिश्चेतुमिति। अत्रापरे प्राहुः। उपरिनिर्दिष्टे पद्य उल्लिखितानां पण्डितानां समानकालिकत्वाभावेन निर्मूल एव तावन्नवरत्न वृत्तान्तः। तथाहि। पण्डितेष्वेषु निर्दिष्टो घटखर्पर आसीन्नवेत्येवाद्यापि सन्देहः। केवलं तु घटखर्पराख्यं किञ्चन काव्यं सर्वत्रापि सुप्रचारं दृष्टम्। तच्चान्येनैव केनापि कविना प्रणीतम्। अमरसिंहस्त्वमरदेवापरनामा समभूत्। स च ख्रिस्तीयपञ्चमशताब्दीमारभ्य सप्तमशताब्द्याः पूर्वं विद्यमाने समये समुद्भूत इति प्रतीयते। सप्तमशताब्द्यां (612) हि चीनाद्भारतवर्षं पर्यटता हुएनुसंगनाम्ना बौद्धपथिकेन बुद्धगयायां प्रत्यक्षीकृतं किमपि देवतायतनं यत्किल तत्रभवता श्रीमताऽमरदेवेनैव निरमायि। किन्तु यः पञ्चमशताब्द्या आरम्भे (414) समुपागच्छद्भारतवर्षं तस्य तु फॉहेननाम्नः पान्थस्य नैतन्नयनगोचरतामापतितम्। अतोऽनुमीयते देवतायतनस्यास्य रचयिताऽमरसिंहापरनामा श्रीमानमरदेव उपरिनिर्दिष्ट एव (414-612) समये प्रादुर्बभूवेति। विक्रमपरिषदि समुल्लसता नवरत्नेष्वेवान्यतमेन श्रीमताऽमरदेवेन निर्मितमेतद्-बुद्धायतनमिति वदन्ति। वराहमिहिरस्तु ख्रिस्तीयेऽशीत्युत्तरपञ्चशततमे वत्सरे देवभूयं प्राप्तः। क्षपणकादीनां तु कवित्व एवाद्यापि बलवान्सन्देहः। एवं च नवरत्नानामेव विद्यमानत्वे सन्देहसमुल्लासाद्विक्रमसभायां तदवस्थानमित्युक्तिरप्रमाणैव। ततश्च वराहमिहिरसमानकालिकत्वमपि कविचूडामणेर्निरस्तप्रायम्। विशदीकरिष्यते चास्माभिः प्रमाणान्तरैः ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वं कालिदासस्य। एवं चाश्रद्धेयतमेयं नवरत्नकथा तन्मूला च श्रीमतः कालिदासस्य ख्रिस्तीयषष्ठशतकसमुद्भूतत्ववार्तेति।

अत्र ब्रूमः। यद्यपि संमन्यामह एव वयं तत्रभवतः कालिदासस्य ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वं तत एव च नांशतोऽप्यङ्गीकुर्मोऽस्य षष्ठशतकादौ समुद्भूतत्वं तथापि नवरत्नविषये तु नास्ति नो बलवान्सन्देहः। तथाहि। घटखर्परस्य तावदस्तित्व एव संशय इति यदुक्तं तन्न सहृद–यानामाह्लादाय। घटखर्परकाव्यस्य तत्कविप्रणीतत्वाभावेऽपि नीतिसारादीनां घटखर्परप्रणीतानां प्रबन्धानां विद्यमानत्वात्। उदाहृतानि च घटखर्परीयनीतिसारवचनानि श्रीभर्तृहरेः शतकत्रयस्य टिप्पन्यां श्रीमता पुरोहितगोपीनाथेन। यथा–

**निमग्नस्य पयोराशौ पर्वतात्पतितस्य च।**
**तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति।।**
**त्रिविक्रमोऽभूदपि वामनोऽ सौ स शूकरश्चैव स वै नृसिंहः।**
**नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम्।।**

(घटखर्परस्य नीतिसारः)

इति। आसीच्च नीतिप्रदीपाख्यप्रबन्धस्य प्रणेता वेतालभट्टोपि। एतत्कृतानि च नीतिप्रदीपीयपद्यानि टिप्पन्यामस्यां दृश्यन्ते। तत्रेदमतिप्रसिद्धतमं **यद्दैवेन ललाटपट्टलिखितं तत्प्रोज्झितुं कः क्षम** इत्यादि। धन्वन्तरि प्रभृतिभिः प्रणीतानां तु प्रबन्धानामद्यावध्युपलम्भाभावेऽपि प्रामाणिकवचनतस्तेषां कवित्वस्वीकारे को दोष इति न जानीमः। भूयसां हि

कवीनां नाद्यापि प्रत्यक्षीभावमुपयाताः प्रबन्धाः। ह्यः पुनरदृष्टाः प्रबन्धा अद्य दर्शनविषयतामुपयान्ति येषां खल्वस्तित्व आप्तानामपि बलीयान्सन्देहः। सत्येवं प्रामाणिकैः कवित्वेन निर्दिष्टानां प्रबन्धनामनुपलम्भमात्रं हेतूकृत्य तेषां कवित्वेऽस्तित्वाभावे चाश्रद्धासमुन्मेषो न न्याय्यः। नापि धन्वन्तरिक्षपणकेत्यादि पद्यं निर्दिश्य जगतः प्रतारणायां प्राचां कमपि हेतुं पश्यामः। अत एव समभिमन्यामहे धन्वन्तरिप्रभृतीनामस्तित्वं कवित्वं च।

अमरसिंहस्त्वमरदेवापरनामैवेति यन्निर्दिष्टं तत्र न किंचित्प्रमाणं पश्यामः। न च लोकवादमात्रं प्रमाणमिति वक्तव्यं तस्य वाचनिकप्रमाणतो दुर्बलत्वेनाग्राह्यत्वात्। विद्यन्ते तु वाचनिकानि प्रमाणानि यैरमरसिंहस्यामरदेवापराख्यत्वं कल्प्यमानं बाधयितुं शक्यते। तानि चात्रयुक्तयनुगतानि निर्देष्टुमिष्यन्ते। तथाहि। आसीत्किल पुरा कश्चिदमरसिंहो नाम पण्डितप्रवरो येनैवामरकोशापराख्यं नामलिङ्गानुशासनं नामाभिधानं प्राणायि। अभिधानं चैतद्विरचयितुर्वैय्याकरणधुरीणतां विस्पष्टयति। अत्र हि विद्यमानं लिङ्गादिसंग्रहाख्यं प्रकरणं न हि विना महावैय्याकरणेन निबन्धुं शक्यम्। एवमन्तरान्तरा विद्यमानानि च क्षेपिष्टक्षो दिष्ठेत्यादीनि पद्यानि वैय्याकरणमन्तरा दुर्ग्रन्थान्येव। वैय्याकरणश्चायमरसिंहों जैन एवेत्यत्र न किंचिद्‌वलवत्तरं प्रमाणमुपलब्धम्। यत्तु नामलिङ्गानुशासनगतं मङ्गलं धर्मराजौ जिनयमावित्यत्र जिनशब्दस्य पूर्वनिपातः स्वर्गवर्गे च प्रथमतो जैनमतानुयायिनामेव नामनिर्देश इत्येतान्येवात्र प्रमाणानि। यस्यज्ञानदयासिंन्धोरित्यत्र हि न कश्चिदपि देवो विशिष्य वर्णितः। तेनात्र जिनस्यापि वर्ण्यत्वं कल्पयितुं शक्यम्। धर्मराजौ जिनयमावित्यत्र चाभ्यर्हितं पूर्वमिति जिनशब्दस्य पूर्व प्रयोगः। न च जैनमन्तरा जिनः कस्याप्यभ्यर्हितत्वमुपयाति। सर्वज्ञः सुगतो बुद्ध इत्यादीनां स्वर्गवर्गे प्रथमतो निर्देशश्च न ह्यार्यमतानुयायिभिर्विधातुं शक्यः। प्रधानं हि प्रथमतो निर्देष्टुं युक्तम्। न चार्यमतानुयायिषु बुद्धादयः प्रधानत्वमधिगच्छेयुः। अतश्चायं नामलिङ्गानुशासनाख्यः कोशो जैनेनैवामरसिंहेन प्रणीत इति केचित्। तन्न। मङ्गलश्लोके हि यथा जिनो बुद्धो वा वर्ण्यत्वेन कल्प्यते एवं भगवान्महेश्वरो वा श्रीकृष्णो वाऽपिवर्ण्यत्वेन कल्पयितुं शक्यः। तत्र कस्याश्चिदपि देवताया विशिष्य वर्णितत्वाभावात्। दृश्यते चैषा शैली दुर्गसिंहस्य यदेष आत्मनः शास्त्रस्य बौद्धादिषु प्रचारमभिलष्यन्मङ्गलादौ नैव कांचिद्देवतां विशिष्योपवर्णयति। परन्तु यथा बौद्धैर्जैनैरार्यैश्च मङ्गलस्य स्वाभीष्टदेवतापरत्वेनैवार्थाः कल्प्येरंस्तथैव पद्यान्यारचयति। यथा—

**देवदेवं प्रणम्यादौ सर्वज्ञं सर्वदर्शिनम्।**
**कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्ववार्भिकम्।।**

इतिसन्धिवृत्तौ। धर्मराजौ जिनयमावित्यादिकं तु प्रणेत्राबुद्धा दिष्वप्यात्मनः प्रबन्धस्य प्रचारमाशंसमानेनोपनिबद्धम्। आसीद्धि नामलिङ्गानुशासनप्रणयनसमये बौद्धादीनामेव विशेषतः प्राबल्यम्। यदित्वभिधानमेतद्‌बौद्धादिजातीयेनैव प्राणेष्यत तदा शाक्यस्मृत्यादय इव परिहरणीयत्वमापत्स्यत। दृश्यते च वैदिकप्रकाण्डेष्वपि सविशेषः प्रचार एतस्य। न चोत्तमत्वादेवास्य तथाविधत्वमिति प्रवक्तव्यमुत्तमानामपि जैनव्याकरणग्रन्थानां प्रचारादर्शनात्। अतो नामलिङ्गानुशासनप्रणेता वैय्याकरणपुङ्गवः श्रीमानमरसिंहो बौद्धादिभिन्न एवेति स्वीकरणीयम्। ननु भोः कोयमिति चेत्कातन्त्रव्याकरणवृत्तिकृच्छ्रीमान्दुर्गसिंहापर-नामाऽमरसिंह एवेति ब्रूमः। किमत्र* प्रमाणमिति चेत्।

**दुर्गसिंहप्रचरिते नामलिङ्गानुशासने।**
**लभते ह्यमरोपाधिं राजेन्द्रविक्रमेण सः।।**

इत्यमरकोशस्य श्रीकण्ठीयव्याख्यागतं पद्यमिति निबोध। स्पष्टं चात्र नामलिङ्गानुशासनस्य श्रीदुर्गसिंहप्रणीतत्वम्। दुर्गसिंह एव कदाचिन्नामलिङ्गानुशासनं प्रणीयात्मनो वैमात्रेयाय ज्यायसे भ्रात्रे भूपतितिलकाय सहृदयोत्तंसाय श्रीमद्विक्रमादित्याय प्रदर्शयामास। तदवलोकनेनैकान्ततः सन्तुष्टश्च श्रीविक्रमादित्यो दुर्गसिंहस्य कीर्तिममरीकर्तुं वाऽमरभावं गमिष्यन्तीं

---

* प्रमाणवचनानि चात्रत्यानि श्रीमज्जयचन्द्रसिद्धान्तभूपणभट्टाचार्यमहाशयप्रणीतात्काल्यापव्याकरणे दुर्गसिंह इत्यतः प्रबन्धात् उध्दृतानि।

विचिन्त्य वाऽस्यायमरसिंह इत्युपाधिं प्रायच्छत्। उपवर्णितश्चायमर्थ उपरितनस्यैव पद्यस्योत्तरार्धे श्रीकण्ठेन। किंवदन्ती चैवं प्रामाणिकवदनविहारिणी सुप्रचारा वङ्गेषु। दुर्गसिंहस्य च महावैय्याकरणत्वे तत्कृता कालापव्याकरणवृत्तिस्तदीयान्येव च।

**अहंच भाष्यकारश्च कुशाग्रीयधियावुभौ।**
**नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः।।**

इत्यादीनि वचनानि प्रमाणभावं भजन्ते। अत एव वैय्याकरणपरिगणनावसरे

**इन्द्रश्चन्द्रः काशकृत्स्नाऽपिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः।।**

इति कविकल्पद्रुमे बोपदेवोऽमरनाम्नैव दुर्गसिंह स्मृतवानित्याप्तप्रवराः। अयं च दुर्गसिंहापराख्योऽमरसिंहो द्विजाधिपतेः श्रीशबरस्वामिनः शूद्रायां सम्भूतःपुत्रः। शबरस्वामी च वर्णचतुष्टयसम्भूताश्चतसृर्भार्याः परिणिनाय। तत्र ब्राह्मण्यां ज्योर्विक्तिलको वराहमिहिरः समजायत। क्षत्रतनयायां श्रीमान्विक्रमादित्यो भर्तृहरिश्चाभूताम्। वैश्यायां हरिचन्द्रः शङ्कुश्च प्रजज्ञतुः। शूद्रायां त्वमरोनाम पुत्रः संबभूव। तदुक्तं प्राचीनैः—

**ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी**
**राजाभर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्।**
**वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती**
**शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः।।** इति।

अत्रैवं केचिदाशङ्केरन्। ननु कथं नामैष श्लोकः समवगाहतां प्रमाणसरणिम्। दृश्यते ह्येतद्विपरीत एवार्थः पतञ्जलिचरितकाव्ये प्रतिपाद्यमानः। तथाहि। आसीत्पुरा व्याकरणमहाभाष्यकारो मुनिः पतञ्जलिर्नाम। स च विरचय्य व्याकरणमहाभाष्यं शिष्यान्पाठयामास। तेषु पुनः प्रमादं कृतवन्तमेकं शिष्यं राक्षसो भवेति शशाप। ततश्चरणयोर्लुठन्तं च तं यदा पचधातोर्निष्ठायां पचितमिति रूपं प्रतिपद्य कीदृशं पचतेर्निष्ठायां रूपमिति पथिकान्पृच्छन्तं भवन्तं कोऽपि पान्थः पक्वमिति ब्रूयात्तदा विमुक्तशापो भविष्यसीति प्राह। सोऽपि तदात्व एव राक्षसभावं प्रपन्नः कस्मिंश्चन वटे निववास। पप्रच्छ च गतागतं कुर्वाणान्कीदृशं पचेर्निष्ठायां रूपमिति। एवं पृच्छन्तं चैनं कदाचित्कश्चिद्द्विजातिः पक्वमित्युत्तरयामास। ततः शापत उन्मुक्तः स पतञ्जलिशिष्यस्तं द्विजन्मानं को भवानित्यनुयुयुजे। ब्राह्मणोऽपि चन्द्रगुप्तशर्माहं महाभाष्याध्ययनायोज्जजिन्याः सकाशाद्भवन्तमनुप्राप्तोऽस्मीति जगाद। ततः सोऽपि तं भाष्यमध्यापयामास। अधीतभाष्यश्च ब्राह्मणश्चसृर्भार्या विभिन्नवर्णाः परिणिनाय। तासु च चतुरः पुत्राञ्जनयामास। तत्र कस्य किं नामेत्यभिहितं पतञ्जलिचरिते सप्तमसर्गे यथा—

**यमजीजनत्प्रथमवर्णकन्यका**
**तनयं द्विजो वररुचिं तमाख्यया।**
**स्वयमाजुहाव कृतवंशजन्मनः**
**पदशास्त्रवार्तिककृतः पवित्रया।।**
**यमसूत चन्द्रमिव सिन्धुवीचिका**
**नृपकन्यकाऽस्य विततान नाम सः।**
**भुवि सोऽयमर्क इव विक्रमे भवे-**
**दितिविक्रमार्क इति विश्रुतं भुवि।।**
**वचसैव भर्तुरयमर्हति स्वयं**
**वसुधां नयानयविभागचञ्चुना।**

**इति वैश्यजातनुभवः स भट्टिरि-**
**त्यभिधां चकार भटिधातुवाच्यवत्।**
**धरणिं बिभर्ति दशभिः शिरःशतैः**
**प्रलये हरिष्यति च यो विषार्चिषा।**
**फणिनोऽस्य भर्तृहरिरित्यभिख्यया**
**स समाह्वयच्चरमवर्णजासुतम्।।** इति।।

एवं च ब्राह्मण्यामभवद्वराहमिहिर इति पद्यस्य पतञ्जलिचरितस्थवृत्तविरुद्धत्वात् यमजीजनदित्यादीनामेव च ग्रन्थस्थत्वेन बलवत्त्वाद्दुर्बलस्य ब्राह्मण्यामित्यादिपद्यस्य न प्रामाण्यमिति प्राप्ते ब्रूमः। न हीतिहासविषये पतञ्जलिचरितस्य प्रामाण्यमङ्गीकर्तुं शक्यम्। तत्रत्यैर्भूयोभिः पद्यैस्तस्य तथाविधत्वाभावावगमात्। तथाहि। व्याकरणमहाभाष्यप्रणेतारं भगवन्तं पतञ्जलिमधिकृत्य

**सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः**
**कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम्।।25।।**

इति पञ्चमसर्गे प्रोक्तम्। एतच्च सर्वथैव पुरावृत्तविरुद्धम्। तथाहि। न किल योगसूत्रप्रणेतुर्व्याकरणमहाभाष्यप्रणेतुश्च कश्चित्सम्बन्धो दृष्टः। पाणिनिपूर्वकालिको हि योगशास्त्रप्रणेता पाणिन्युत्तरकालिकश्च महाभाष्यकृत्। पाणिनिना हि **पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** 4।3।110 इति सूत्रे भिक्षुसूत्रप्रणेता पाराशर्यो निर्दिष्टः। पाराशर्यश्च भगवान्बादरायणाद्यपराख्यो वेदव्यासः। भिक्षुसूत्राणि च तत्प्रणीतान्यथातो **ब्रह्मजिज्ञासे**त्यादीनि वेदान्तसूत्राणि। एवं च पाणिनेरपि प्राचीनो भगवान्वेदव्यासः। सोऽपि वेदान्तदर्शने **एतेन योगः प्रत्युक्त** इति (2।1।3) सूत्रयामास। योगश्च **अथ योगानुशासनम्** इत्यादिर्भगवता पतञ्जलिना सूत्रित एव। तस्यैव षड्दर्शन्यां परिगणनात्। अन्यविचारितस्य योगदर्शनस्याप्रसिद्धत्वात्प्रसिद्धस्यैव प्रत्याख्यानयोग्यत्वाच्चेति। एवं च भगवतो वेदव्यासादपि प्राचीनस्य योगशास्त्रप्रणेतुः पाणिन्युत्तरकालिकत्वायोगाद्व्याकरणमहाभाष्यकर्तुश्च पाणिन्युत्तरकालिकत्वात्प्रबन्धद्वयस्य समानकर्तृकत्वाभावः सुस्पष्टः। ततश्च महाभाष्यकर्तुरत्यन्तं प्राचीनो योगानुशासनप्रणेतेति सिद्धम्। एतदविज्ञाय महाभाष्यकर्तुरेव योगसूत्रप्रणेतृत्वमङ्गीकुर्वाणस्य नास्त्यंशतोऽपीतिहासविषये प्रामाण्यं पतञ्जलिचरितप्रणेतुरिति सिद्धम्।

इतश्चेतिहासविषये न प्रामाणिकः पतञ्जलिचरितकारः। स हि भट्टिकविं श्रीमद्विक्रमादित्यस्यैव भ्रातरं प्राह। भट्टिस्तु

**काव्यमिदं विहितं मया वलभ्यां श्रीधरसूनुनरेन्द्रपालितायाम्।**
**कीर्तिरतो भवतान्नृपस्य तस्य क्षेमकरः क्षितिपो यतः प्रजानाम्।।**

इति भट्टिकाव्यस्यान्तिमेन पद्येन नरेन्द्रभूपालपालितायामेव वलभ्यां नाम नगर्यामात्मनो निवासं ध्वनयंस्तमेव नरपालमाशिषा संयोजयति। यदि तु भट्टिर्विक्रमार्कस्य बन्धुरभविष्यत्तदा न स तं तथाविधं सार्वभौमं महीपालं विशेषतश्चात्मनो वर्णोत्तमं भ्रातरमपास्य भूपान्तरमाश्रयिष्यत्। नापि विक्रमार्कसदृशः सहृदयोत्तंसस्तस्मिन्राजन्यान्तराश्रय-प्रसङ्गमापातयिष्यत्। अतो नास्ति भट्टेर्विक्रमार्कभ्रातृत्वम्। अत एव च भट्टिं विक्रमादित्यस्य भ्रातरं प्रतिपादयतो नास्त्यंशतोऽपि प्रामाण्यमितिहासविषये पतञ्जलिचरितकारस्येति सिद्धम्।

यथा देवदेवं प्रणम्यादावित्ययमर्थद्वयविशिष्टः श्लोके एवं दुर्गसिंहस्यान्येऽपि तथाविधाः श्लोका दृश्यन्ते। यथा–

(सन्धिटीकाया) **शिवमेकमजं बुद्धमर्हन्तं तं स्वयम्भुवम्। कातन्त्रवृत्तिटीकेयं नत्वा दुर्गेण रच्यते।** इति। अत्रापि शिवबुद्धार्हदादिशब्दानां द्व्यर्थकत्वं स्पष्टम्। एवं षट्कारिकायां **भग्नं मारबलं येन निर्जितं भवपञ्जरम्।**

**निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम्।** इति। एतदपि पद्यं द्व्यर्थतया योजयितुं शक्यम्। न चैतदेवास्य प्रणेतुर्वैदिकधर्मानुयायित्वाभावे प्रमाणमिति विप्रतिपत्तव्यम्। चतुष्टयवृतौ **रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता। स एव नाथो भगवानस्माकं पापनाशन** इति भगवतो रुद्रस्यैवात्मनः कुलदेवतात्वेनाङ्गीकारात्।

न चैवं वराहमिहिरस्य ख्रिस्तीयषष्ठशतकोद्भूतत्वं विहन्येतेति वक्तव्यम्। अन्यस्यापि वराहमिहिरस्य सम्भवात्। न चायं नियमो यदेकेनैव वराहेण भवितव्यमिति। प्रमाणानुगतत्वाच्च वराहमिहिरद्वयकल्पनं न विरुद्धम्। एवं ज्योर्वित्त्वमप्यस्य न निर्मूलम्। बृहत्संहिताया एतत्प्रणीतत्वकल्पनेऽपि दोषाभावात्। अकल्पनेऽपि प्रामाणिकवचनबलात्तत्प्रणीतप्रबन्धानुपलम्भेऽपि ज्योतिर्वित्त्वस्य दुर्वारत्वात्। अनुपलब्धस्यापि प्रबन्धस्यासत्त्वकल्पनस्यान्याय्यत्वाच्चेति। तत्तच्छास्त्रे प्रबन्धविरचनाभावेऽपि तत्तेषां तत्तच्छास्त्रवित्त्वाभावस्य वक्तुमयोग्यत्वात्। न ह्ययं नियमो यत्तत्तच्छास्त्रविद्भिस्तत्र तत्र प्रबन्धाः प्रणीयन्त एवेति। दृश्यन्ते हि भूयांसः पण्डितप्रवरा ये किल प्रबन्धप्रणेतृत्वाभावेऽपि पण्डितप्रवरा इत्येवाख्यायन्ते। ततश्च दुर्निवारं ज्योतिर्वित्त्वं वराहमिहिरस्येति षष्ठशतकोद्भूताद्वराहमिहिरादुपरिनिर्दिष्टपद्यप्रतिपाद्यस्य वराहमिहिरस्य विभिन्नत्वकल्पनेपि दोषाभावः सुस्पष्टः।

वररुचिश्चात्र निर्दिष्टः प्राकृतमञ्जर्याः प्रणेतैव स्यादिति प्रतिभाति। शङ्कुस्तु श्रीविक्रमादित्यस्यैव वर्णावरो भ्रातेति निर्दिष्टमेवेद्मुपरितने पद्ये। श्रीमान्कालिदास्तु प्रसिद्धम् एव। एवं धन्वतरिक्षपणकवर्जं सर्वेषामपि नवरत्नान्तर्गतपण्डितानां सङ्गतिः सम्पन्ना। एतेषां समानकालिकत्वं तु परस्तात्प्रतिपादयिष्यामः। धन्वन्तरिक्षपणकौ तु पण्डितौ श्रीमद्विक्रमादित्य-सभामलञ्चक्राते इति प्रमाणमत्र धन्वन्तरिक्षपणकेत्यादिकं पद्यम्। बलवत्तरप्रमाणाभावाच्च तयोरस्तित्वाभावो न शक्यः सम्भावयितुम्। एवं च प्राचीनानां जगत्प्रतारणे प्रयोजनाभावात्तत्प्रबन्धेभ्यश्च नवरत्नानामस्तित्वाभ्युपगमान्नवरत्नेषु भूयसां रत्नानां तत्प्रबन्धानां च विद्यमानत्वाद्बलवत्प्रमाणान्तरमन्तरा तेषां समानकालिकत्वस्य बाधयितुमशक्यत्वात्किंवदन्ती-मात्रापेक्षया वाचनिकप्रमाणस्य *बलीयस्त्वाद्दुर्गसिंहस्यैवामरसिंहापरनामत्वाद्वाचनिकप्रमाणानुसारेण कालिदासानेकत्वस्येव वराहमिहिरद्वयस्यापि कल्पयितुं युक्तत्वाच्च सिद्धं नवरत्नानामस्तित्वम्। इतिनवरत्नविचारः।

## मातृगुप्ताचार्यविचारः

3 अपरे त्वाहुः सुप्रसिद्धतमः श्रीमान्मातृगुप्ताचार्य एव कालिदासापराभिख्यः। मात्रा श्रीकाल्या गुप्तो रक्षितो दासत्वात्पालितो मातृगुप्तः कालिदास इत्यर्थः। मातृगुप्ताचार्यश्च श्रीमता प्रवरसेनाख्येन काश्मीराधिपतिनाऽऽत्मनो राज्यपदे प्रतिष्ठापितः। प्रवरसेनश्च ख्रिस्तीयषष्ठशताब्द्यामासीदिति पुरावृत्तप्रबन्धेभ्यो विज्ञातम्। अत एव च तस्मिन्नेवावसरे श्रीमातृगुप्ताचार्यस्याप्यवस्थानं सुस्पष्टम्। मातृगुप्ताचार्य एव च कालिदास इति ख्रिस्तीयषष्ठशताब्द्येवावस्थितिसमयः कालिदासस्येति। तदेतन्नांशतोऽपि युक्ततामावहति। नहि मातृगुप्तकालिदासपदयोः समानार्थकत्वे किंचित्प्रमाणं पश्यामः। नापि मातृशब्दस्य कालीपर्यायत्वं दृष्टम्। ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा। कौमारी चैव चामुण्डा चर्चिकेत्यष्ट मातरः। इत्यादिवचनेषु च काल्या अविद्यमानत्वान्न हि मातृपदेन काल्या ग्रहणं सम्भवति। नापि कोशादौ गुप्तशब्दो दासपर्यायो दृष्टः। नापि लक्षणया गुप्तशब्दस्य तथाविधत्वं स्वीकर्तुं शक्यम्। प्रयोजनमन्तरा लक्षणाया अनङ्गीकारात्। यत्रापि कोशादौ श्रीकालिदासनामानि दृश्यन्ते न किल तत्र मातृगुप्तपदम्। रघुकारः कालिदासो मेधारुद्रश्च कोटिजित्। इत्यभिधानम्। यदि तु मातृगुप्तपदस्य कालिदासवाचकत्वमभविष्यत्तदा कोशादावपि तन्निरदेक्ष्यत। नैव तु निर्दिष्टम्। अतोऽवश्यमभ्युपेतव्यं न कालिदासवचनो मातृगुप्तशब्द इति। अभिज्ञानशाकुन्तलादिव्याख्यासु च श्रीमद्राघवभट्टादयो मातृगुप्ताचार्यं मातृगुप्ताचार्यनाम्नैव व्यपदिशन्ति न तु कालिदासनाम्ना। यथा शाकुन्तलव्याख्यायां नाटकलक्षणोपक्रमे (पृ० ९) तल्लक्षणमुक्तं मातृगुप्ताचार्यैः इत्यादि। किं च मातृगुप्ताचार्यः स्वप्रणीतेष्वभिनवभारतादिषु

* दुर्गसिंह एव नवरत्नेष्वन्यतम इति **स रत्नं नवरत्नानामिति** श्रीकण्ठीयव्याख्यानादवगतम्।

प्रबन्धेषु मातृगुप्तनाम्नैवात्मानं निर्दिशति। औचित्यविचारचर्चायां श्रीक्षेमेन्द्रोऽपि मातृगुप्तकालिदासौ पार्थक्येनैव निर्दिशति। यथा त्रयोदशकारिकाविवरणे—यथाकालिदासस्य—जातं वंशे भुवनविदिते पुष्करावर्तकानां जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः। तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामेति। वचनौचित्यप्रत्युदाहरणे च न तु यथा मातृगुप्तस्य—नायं निशामुखसरोरुहराजहंसः कीरीकपोलतलकान्ततनुः शशाङ्कः। आभाति नाथ तदिदं भुविदुग्धसिन्धुडिण्डीरखण्डपरिपाण्डु यशस्त्वदीयम्। इति।

एवं च मातृगुप्तकालिदासयोः पर्यायत्वाभावान्मातृगुप्तस्य षष्ठशताब्दीसमुद्भूतत्वाङ्गीकारेपि नास्ति तथाविधत्वं तत्रभवतः कालिदासस्येति सिद्धम्। इति मातृगुप्ताचार्यविचारः।

## दिङ्नागवृत्तान्तः

4 इतरे तु वदन्ति—

**अद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभि-**
**र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।**
**स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं**
**दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान्।।14।।**

इति मेघदूते कालिदासः प्राह। तत्र च समासोक्तिमर्यादया निचुलः कालिदासस्य सुहृत्कविविशेषो दिङ्नागस्तु कालिदास्य प्रतिपक्षोऽत्यवष्टब्धो हस्तचेष्टया प्रतिवादिनां निर्भर्त्सकः कविरित्यवबुध्यते। एतदेव चैतत्पद्यव्याख्यायां मल्लिनाथेनोक्तम्। दिङ्नागस्तु कस्यापि बौद्धपण्डितस्यासङ्गनाम्नश्छात्रः। असङ्गश्च बुद्धावतारात्परं व्यतीतायां वत्सराणां नवशत्यां सम्भूत इति तिबेटीयेभ्यः पुरावृत्तेभ्यः स्फुटीभवति। किं चायं ख्रिस्तीयेऽष्टसप्तत्युत्तरपञ्चशततमे वर्षे भारतवर्षमलञ्चकारेत्यपि केचित्पुरावृत्तविदः। ततश्च ख्रिस्तीयषष्ठशताब्द्यामेव दिङ्नागाचार्यो बभूवेति स्पष्टतया प्रतीयते। तत्प्रतिपक्षतया च कालिदासोऽपि तस्मिन्नेवावसरे प्रादुर्बभूवेति। तदेतदप्यापाततो रमणीयम्। सम्भवति सरले प्रमाणानुगते चार्थेऽप्रमाणानुगतार्थकल्पनस्यान्याय्यत्वात्। यस्मान्मेघेनोदङ्मुखेनोत्पतनीयं तस्मिन्प्रदेशे वेतसानां सरसत्वस्य कल्पनं सुयुक्ततममेव किन्तु निचुलनाम्नः कवेः कल्पने किंवा प्रमाणमिति नैव जानीमः। एवं उत्पततो मेघस्य स्थौल्यादिना दिङ्नागशुण्डासादृश्याद्दिङ्नागस्य कवेरग्रहणात्तस्यकालिदाससमानकालिकत्वे प्रमाणाभाव इत्यदि नात्र विस्मरणीयम्। कालिदाससमानकालिकत्वे श्रीमल्लीनाथोक्तिरेव प्रमाणमिति चेन्न। मल्लीनाथोक्तेः किंवदन्तीमात्रमूलत्वकल्पनस्यैवार्हत्वात्। दृश्यन्ते हि किंवदन्तीमात्रमाश्रित्य तत्तवृत्तान्तमुपनिबन्धन्तो भूयांसः प्राचीनाव्याख्याकृतः। निर्मूला अपि च भूयसीः किंवदन्त्यः सप्रचारा दृश्यन्ते। ततश्चात्र प्रमाणान्तरमन्तरा मल्लीनाथवचनस्य न शक्यं प्रामाण्यमङ्गीकर्तुम्। अत एव च नास्ति श्रीकालिदासदिङ्नागयोः समानकालिकत्वमिति। किं च बलवत्तरैः प्रमाणान्तरैः कालिदासस्य ख्रिस्तीयशकारम्भतोपि प्राचीनत्वस्यावधार्यमाणत्वाद्दिङ्नागस्य च ख्रिस्तीयषष्ठशताब्द्युद्भूततया नास्त्युभयोः समालनकालिकत्वम्। इति दिङ्नागविचारः।

## हूणविजयविचारः

5 अन्ये तु रघुवंशे हूणविजयवर्णनमेव कालिदासस्य ख्रिस्तीयषष्ठशताब्दीसमुद्भूतत्वे प्रमाणमिति प्रवदन्ति। तथाहि। कालिदासेन रघुवंशीये चतुर्थे सर्गे षट्षष्टितमे पद्ये रघोरुत्तरदिक्प्रयाणमभिधाय सप्तषष्टितमे च सिन्धुसरिदुपकण्ठेनोदक्प्रयाणं निगद्य—

**तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम्।**
**कपोलपाटलादेशि बभूव रघुचेष्टितम्।।**

इति रघुकर्तृको हूणविजयोऽभिहितः। यदेव मूलमादाय कालिदासेन रघुवंशं निरमायि तत्र तु वाल्मीकीयरामायणे न क्वापि हूणनाम्नः श्रवणम्। अतश्चैषां हूणानां कालिदासावस्थानसमये बलीयस्त्वेनाङ्गीकारात्तद्विजयवर्णनेन नायकोत्कर्ष प्रख्यापयितुकामः श्रीमान्कालिदासो रघुवंशे हूणविजयं प्रतिपादयामास। हूणाश्च ख्रिस्तीयपञ्चमशताब्द्युत्तरमेव भारतवर्षमुपाजग्मुर्व्यजेषत च तत्रत्यान्क्षत्रियोत्तंसानिति प्रसिद्धमितिहासप्रबन्धेषु। ततश्च रघोर्हूणविजेतृत्वमुपवर्णयतः कालिदासस्य ख्रिस्तीयषष्ठशताब्द्यामेव प्रादुर्भाव इति प्रतीयत इति।

अत्रोच्यते। उक्तिरियमर्वाचीनानामत्यन्तमेव निःसारा। न हि षष्ठशताब्द्यामेव भारतवर्षे हूणा अविद्यन्त न पुनरन्यदेत्यत्र किंचिदपि प्रमाणं दृष्टं प्रत्युत चतुर्थशताब्द्याः पूर्वमेव ग्रथिते ललितविस्तारनाम्नि बौद्धग्रन्थे चीनहूणप्रभृतीनां नामानि निर्दिश्यन्ते। ततश्च षष्ठशताब्द्याः पूर्वमपि हूणानां विद्यमानत्वं दुर्वारम्। न च चतुर्थशताब्द्यामेव कालिदास-सम्भवोऽस्त्विति वाच्यम्। हूणानामत्यन्तप्राचीनत्वस्य पुराणेतिहासादिभिः सिद्धत्वेन रघावुपवर्णितो विजयोऽर्वाचीनानामेव हूणानामित्यत्र प्रमाणाभावात्। यत्तु हूणाः काश्मीराधिपतयो राजविशेषाः काश्मीराश्च षष्ठशताब्द्यामेव हूणायत्ततामुपजग्मुरिति तन्न विचारसहम्। रघुव्याख्याकृता हि मल्लीनाथेन हूणा जनपदाख्याः क्षत्रिया इति व्याख्यातम्। शब्दार्थनिर्णये च व्याख्यानत एव विशेषप्रतिपत्तिरिति हूणदेशाधिपतय एव हूणा न तु काश्मीराधिपतय इति सिद्धम्। युक्तं चैतत् जनपदवाचिनो हूणशब्दात्तद्राजप्रत्ययलुकि हूणदेशाधिपत्यर्थकस्य हूणशब्दस्य निष्पत्तेः शास्त्रानुगतत्वात्तदितरहूणशब्दे प्रमाणाभावाच्च। अव्युत्पन्न एव हूणशब्दोऽङ्गीकरणीय इति चेदसद्ग्रहस्तदाऽपि न हूणानां प्राचीनतमत्वव्याहतिः। हूणशब्दस्य भारतादौ विद्यमानत्वात् तथाहि महाभारत आदिपर्वणि 177 अध्याये 35-37.

**असृजत्पह्लवान्पुच्छात्प्रस्रावाद्द्राविडान् शकान्।**
**योनिदेशाच्च यवनाञ् शकृतः शबरान्बहून्।।**
**मूत्रतश्चासृजत्कांचीञ् शरभांश्चैव पार्श्वतः।**
**पौण्ड्रान् किरातान्यवनान् सिंहलान्बर्बरान्खशान्।।**
**चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान्।**
**ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि।।** इति।

श्रीमन्महाभागवतेऽपि किरातहूणान्यवनानित्यादौ हूणशब्दो दृष्टः।

किं च हूणानां कालिदाससमकालिकत्वस्यापि तुष्यतुन्यायेनाङ्गीकारे स्वसमकालिकहूणविजयवर्णने कस्तावद्धेतुः कालिदासस्य। यदि तु हूणानां वीरप्रकाण्डतया तद्विजयेन रघोरुत्कर्षवर्णनमेवात्र निदानमिति ब्रूषे तदाऽपि न निस्तारः। विश्वामित्रसदृशानां क्षत्रियोत्तंसानां ये विजेतारस्तेषामेव हूणानां पराजय्यत्वेन ग्रहणेपि तथाविधहेतुसिद्धेः। अतो नव्यग्रहणे हेत्वभावादपि प्राचीनहूणविजय एवोपवर्णितः कालिदासेनेत्यङ्गीकरणीयम्। अपि च हूणानां प्राचीनत्वाभावे कालिदाससमकालिकत्वे च तद्विजयवर्णनं कालिदासस्यासत्काव्यप्रणेतृत्वमापादयेत्। तथा चासत्काव्यत्वाद्रघ्वादी-नामनादरापत्तिः। न च रघुवंशोदन्ते मूलभूते रामायणे रघुकर्तृकस्य हूणविजयस्यानुपनिबन्धनाद्भवन्मतेऽपि रघ्वादीनाम-सत्काव्यतापत्तिर्दुर्वारोति वक्तव्यम्। हूणानामतिप्राचीनत्वस्य भारतादिभिः संसिद्धतया रघुकालेऽपि तेषां विद्यमानत्व-संभवेनाशेषभुवनजेतुः सार्वभौमस्य रघोस्तद्विजेतृत्वसम्भवात्। संभवमात्रविषयीभूतानां चेतिवृत्तानां कविभिरुपवर्ण्यमानत्वस्य दृष्टत्वात्। कालिदाससमकाल एव विद्यमानानां तु हूणानां नास्ति रघुकाले सम्भवनीयत्वम्। नापि प्राचीनवर्णनप्रसंगे स्वसमकालिकानर्थानुपवर्णयन्ते कवयः। न हि केनापि कविशिरोमणिना नलादीनां चरितं विवर्णयिषुणाऽऽधुनिकनृप-विजयस्तत्कर्तृकत्वेनोपनिबद्धो नापि पाण्डवानां चरितमुपनिबद्धुकामेन प्रथितमपराक्रमामवरङ्गजीवा[1]दीनां विजयोभिहितः। नाप्यभिधीयते। नाप्यभिधास्यते। हूणानां प्राचीनतमत्वे तु तद्विजयो न दोषायेत्युक्तमेव प्राक्। अन्यच्च रामायणादीनीतिवृत्तमात्रावलम्बीनि काव्यानि। रघुवंशादीनि तु रसमात्रावलम्बीनि। अत एवात्र क्वचिदसतामपि भावानामुपनिबन्धः सतामप्युपनिबन्धाभावश्चेति काव्यानुशासनानुगुणा व्यवस्थेति द्रष्टव्यम्। अत एव चोदात्तराघवे

1. औरङ्गझेब.

वालिवधानभिधानं कुमारसंभवकिरातार्जुनीयादौ च भूरिशृङ्गारोपवर्णनं सङ्गच्छते। महाकाव्ये च नायकस्याभ्युदयो विस्तरशो वर्णनीय इति कवीनां समयः। उपवर्णयन्तश्च नायकाभ्युदयं महाकवयो यं यं भावं नायकसमये संभवनीयं पश्यन्ति तन्तमुपवर्णयन्ति। सत्यप्येवं नायकसमये सम्भवदभावा नोपनिबध्यन्तेऽर्थाः कविप्रवरैः।

एवं च हूणानां प्राचीनतमत्वस्य भारतादीतिहाससिद्धतया षष्ठशताब्दीमात्रसम्भूतत्वे प्रमाणाभावात्कविसम-कालिकानामेवार्थानामुपवर्णने काव्यस्यासत्त्वापातात्कालिदासस्य च सत्कवित्वान्नांशतोऽपि रघुवंशीयहूण-वर्णनात्कालिदासस्यार्वाचीनतापत्तिः। अत एव च न कालिदासस्य षष्ठशताब्द्यां प्रादुर्भाव इति। इति हूणविजयवर्णनविचारः।

## जामित्रशब्दविचारः

6. केचित्तु कुमारसंभवेनैव कालिदासस्य कालं निर्णेतुमिच्छन्ति। तथाहि कुमारसंभवे सप्तमसर्गे प्रथमं पद्यम्—

**अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम्।**
**समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत्।।** इति।

अत्र च विद्यमानो जामित्रशब्दो ग्रीकभाषावर्तिनो डायमेट्रन (Daymetran) शब्दस्यापभ्रंशः। यदा खल्वार्या ग्रीकेभ्यो ज्योतिःशास्त्रमधिजगिरे तदैव ग्रीकभाषातः संस्कृतभाषां प्रविष्टोऽयं शब्दः। यैः पुनरार्यपण्डितैर्ग्रीकेभ्यो ज्योतिषमधीतं तेष्वार्यभट्ट एव प्रथम इति स्वीयप्रबन्धे जामित्रशब्दमुपनिबध्नतः सुस्पष्टमेव कालिदासस्यार्यभट्टतोऽर्वाचीनत्वम्। आर्यभट्टश्च ख्रिस्तीयपञ्चमशताब्द्यामुत्पन्न इति ततोऽर्वाचीनस्यार्थादेव षष्ठशताब्द्युत्पन्नत्वं कालिदासस्येति।

स्यादेतद्यदि जामित्रशब्दो डायमेट्रन्शब्दस्याप्रभंश एव स्यात्। तदा ह्यपभ्रंशत्वं शब्दानामङ्गीकरणीयं यदा स्वाभिमतभाषायां नैते व्युत्पादयितुं शक्येरन्। नैव पुनर्जामित्रशब्दस्य तथात्वं दृष्टम्। शक्यते ह्ययं संस्कृतभाषायां व्युत्पादयितुम्। प्रयुक्तश्च प्राचीनतमैर्मुनिभिः। व्युत्पत्तिस्तावज्जामिं स्त्रियं जायामिति यावत् त्रायत इति जामित्रमिति। तच्च लग्नात्सप्तमं स्थानमिति ज्यौतिषिकाणां परिभाषा। तत्रैव हि जायाविषयकं शुभाशुभं पर्यालोच्यत एतैः। जामिशब्दश्च श्रुतिष्वपि प्रयुक्तो दृष्टः। यथा ऋग्वेदे सप्तमाष्टकस्य द्वितीयेऽध्याये **स्वसारो जामयस्पतिम्।** इति। तृतीयाष्टकस्य चतुर्थेऽध्याये त्रयोविंशे वर्गे च **जामिमजामिं प्रमृणीहि शत्रुम्।** इति। स्मृतावपि **जामयो यानि गेहानीति** मनुः विद्यते च संस्कृतभाषायां त्रैङ् पालन इति धातुः। न चावयवयोः प्रसिद्धत्वेऽपि नावयविनः प्रसिद्धत्वमिति वक्तव्यम्। देवर्षिनारदप्रणीतायां नारदसंहितायां जामित्रशब्दस्यापि प्रयोगदर्शनात्। तत्र हि विवाहाध्याये **जामित्रशुध्द्येक-विंशन्महादोषविवर्जितम्।** इत्युक्तम्। न चाभिधानग्रन्थेषु जामित्रशब्दस्यानवलोकनाहुर्वारमर्वाचीनत्वमिति प्रवक्तव्यम्। तत्तच्छास्त्रे पारिभाषिकत्वेनाङ्गीकृतानां शब्दानां कोशादावनुपनिवन्धात्। न हि व्याकरणादावेव प्रसिद्धा गुणवृध्द्याशयप्रकृति-सत्प्रतिपक्षपक्षपरामर्शादयः शब्दाः कोशे दृष्टाः। पारिभाषिका ह्येते। ज्यौतिषग्रन्थेषु तु जागित्र शब्दः सप्तमस्थानवाचीत्युक्तम्। तथा हि जातकालङ्कारे ** **जामित्रमस्तं स्मरमदनमद्यूनकामाभिधानम्।** इतिसप्तमस्थानपर्यायेषु प्रोक्तम्। प्रयोगश्च एकैव भौमार्कनवांशके च जामित्रभावस्थबुधार्कयोर्वेत्याभरणादौ।*

---

* एवं–

**चन्द्राज्जामित्रगे शुक्रे शुक्राज्जामित्रगे शनौ।**
**वत्सरेऽष्टादशे प्राप्ते विवाहं लभते नरः।। इति।।**
**जामित्रेमन्दभौमस्थे तदीशे मन्दभूमिजे।**
**वेश्या वा जारिणी वापि तस्य भार्या न संशयः।। इति।।**
**शुक्राज्जा मित्रगे चन्द्रे चन्द्राज्जामित्रगे बुधे**
इत्यादि बृ०पा० होरायाम्.

एवं चानपभ्रष्ट एवायं जामित्रशब्द इति नैष कालिदासस्यार्वाचीनतामापादयितुं प्रभवतीति द्रष्टव्यम्। अथ ज्योति:शास्त्रं सर्वथा ग्रीकेभ्य एवोपात्तमार्यैरित्यभिमानस्तदा हा आर्यविद्यानां दौर्भाग्यमितिब्रूम:। श्रुतिष्वपि त्युपल ज्यौतिषिका नियमा इति। इति जामित्रशब्दविचार:।

## अथग्रहणकल्पनाविचार:

7. केचित्तु रघुवंशत एव कालिदासावस्थितिसमयं निर्णेतुमभिलष्यन्त: प्राहु:। यथा—रघुवंशीयचतुर्दशसग चत्वारिंशत्तमे पद्ये **छाया हि भूमे: शशिनो मलत्वेनारोपिता शुद्धिमत: प्रजाभिरिति** कालिदासेन परमार्थत एव उपावर्णि। अस्य त्वयमर्थ: हि यत: प्रजाभिर्लोकै: भूमे: पृथिव्याश्छाया अनातप: शशिनश्चन्द्रस्य मलत्वेन ग्रहणत्वेनारे शशिनि प्रतिबिम्बितां भूमेश्छायामेव लोका ग्रहणत्वेन व्यपदिशन्तीत्यर्थ:। पारमार्थिकश्चायमुपरागवृत्तान्तो न प्राचीनज्योति:शास्त्रे दृष्ट:। एष हि ग्रीकेभ्य एवार्यभट्टेनोपात्त:। आर्यभट्टात्पराचीनैरेव च भारतीयज्योतिर्विद्भि प्रबन्धेषूपनिबद्ध:। *यच्च कालिदास आत्मन: प्रबन्धेष्वर्थमिममुपनिबध्नाति तदेष आर्यभट्टादर्वाचीन इत्यत्र नास्त्यंश* सन्देह इति।

स्यादेतद्यदि पद्येऽस्मिल्लेशतोऽप्युपरागवर्णनसम्बन्ध: स्यात्। स एव तावद्गगनकुसुमायमान:। अस्य हि मल्लीनाथीयव्याख्यानुगतोऽयमर्थ: यथा निष्कलङ्केऽप्यमृतांशुबिम्बे संलग्नाया भूमिच्छायाया: कलङ्कोयमिति दुष्परिहरं लोकमतानुरोधिभिरेवं निसर्गत एव विशुद्धाया अपि जानक्या रावणसदननिवासात्सदोषेयमित्यपवाद: सम एवास्माभिरिति। नास्ति किल पद्येऽस्मिन्नुपरागवाचक: शब्दो येन *प्रामाणिकोत्तंसमपि मल्लीनाथमविगणय्याधुनिकानु* सरणिमनुसरिष्याम:। न च पण्डित-प्रकाण्डेनापि मलशब्दस्योपरागवाचकत्वमापादयितुं शक्यम्। कोशादौ तथाविधार्थवाचकत्वाभावात्। अत्र तु पद्ये मलशब्द: कलङ्कवाच्येव। कलङ्को हि भूमिच्छायाद्यात्मकत्वेनोपवर्णनं महाकवीनां समय:। स एव चात्र पद्येऽनुसृत: श्रीमता कालिदासेन। इममेव च समयमवलम्बमानानां दृश्यन्ते पद्यानि। तथाहि कुवलयानन्देऽपह्नुतिप्रकरणे—

**अङ्कं केऽपि शशङ्किरे जलनिधे: पङ्कं परे मेनिरे**
**सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे।**
**इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते**
**तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे।।** इति।

अस्य च पद्यस्यापह्नुत्युदाहरणत्वेनापह्नुतेश्च प्रकृतिनिषेधपूर्वकाप्रकृतस्थापकत्वादङ्कपङ्कभूच्छा प्रकृतत्वात्तात्विकत्वमेवेत्यत्र नास्ति संशयावसर:।

तथा तत्रैव—

**मन्थानभूमिधरमूलशिलासहस्र-**
**सङ्घट्टनव्रणकिण: स्फुरतीन्दुमध्ये।**
**छाया मृग: शशक इत्यतिपामरोक्ति-**
**स्तेषां कथञ्चिदपि तत्र हि न प्रसक्ति:।।** इति।

अत्रापि चतुर्थपादगतेन हेतुना पामरोक्तित्वामारोप्य च्छायादीनपह्नुवान: कविस्तेषां तात्विकत्वमेवेति द्यो एवमार्यासप्तशत्यामकारव्रज्यायाम्—

**अस्तु म्लानिर्लोको लाञ्छनमपदिशतु हीयतामोज:।**
**तदपि न मुञ्चति स त्वां वसुधाछायामिव सुधांशु:।।** इति।।

अत्रापि सुस्पष्टैव भूछायायाः कलङ्कत्वोक्तिः। अन्यथा लाञ्छनापदेशस्यामोचनस्य चायोगात्। न हि ग्रहणेन न मुच्यते भगवानमृतांशुरिति।

यदि तु छाया हि भूमेरित्यत्रोपरागवर्णनमेवाभ्यलषिष्यत्कालिदासो यदि चार्यभट्टकल्पनामेवोपनिबन्धुमैहिष्यत तदा खलु छाया हि भूमेः शशिनो ग्रहत्वेनारोपितेत्येवावदिष्यत्। यच्च नैवमवादीत्तनैवमचीकमत। प्रयुज्यते च ग्रहणवाचक द्वयक्षरशब्दप्रयोगप्रसङ्गे ग्रहशब्दः कालिदासेन न तु मलशब्दः। यथा मालविकाग्निमित्रे 4 अङ्के 14 शे पद्ये–

**कदा मुखं वरतनु कारणादृते**
**तवागतं क्षणमपि कोपपात्रताम्।**
**अपर्वणि ग्रहकलुषेन्दुमण्डला**
**विभावरी कथय कथं भविष्यति।।** इति।

केचित्तु पद्येऽस्मिन्ग्रहशब्दः क्षितिवाचक एवेत्याहुस्तन्न प्रमाणाभावात्। उपरागो ग्रहो राहुग्रस्ते त्विन्दौच पूष्णि चेत्यादिकौशादौ हि ग्रहणवाचक एव ग्रहशब्दो दृष्टः। यदि तु तिरस्कृत्य कोशादीन् क्षितिवाचकत्वमेव ग्रहशब्दस्याङ्गीक्रियते तदा यत्र यत्र ग्रहशब्दघटितेन वाक्येन ग्रहणवर्णनं तत्र तत्र क्षितिवाचकत्वमेव ग्रहशब्दस्याङ्गीकर्तव्यम्। अर्धजरतीय-न्यायानुसरणस्यान्याय्यत्वात्। ग्रहणे च क्षितेःकारणताऽऽर्यभट्टेनैव ग्रीकेभ्योऽवगतेति तु भवन्मतं विद्योतत एव। ततश्च यत्र यत्र ग्रहशब्दघटितमुपरागवर्णनं तस्य तस्य पद्यादेरार्यभट्टादर्वाचीनत्वमर्थादायातम्। तथा च भगवतो वाल्मीकेरप्यार्यभट्टादर्वाचीनतापत्तिर्दुर्वारा। तेन हि अयोध्याकाण्डे चत्वारिंशे सर्गे–

**पिता हि राजा काकुत्स्थः श्रीमान्सन्नस्तदा बभौ।**
**परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा।।** इत्युक्तम्।

प्रयुञ्जते च भूयांसः प्राचीना ज्योतिर्विद उपरागार्थे ग्रहशब्दम्। तथा हि

**भत्रिपादान्तरे राहोः केतोर्वा संस्थितो रविः।**
**चतुष्पादान्तरे चन्द्रस्तदा सम्भाव्यते ग्रहः।।**

इत्यादि ज्योतिस्तत्वादौ।

एवं च प्रमाणाभावान्न ग्रहशब्देन पृथिव्या ग्रहणम् ततश्च कदामुखमित्यादाविव छाया हि भूमेरित्यत्रापि ग्रहणार्थे सरलतया ग्रहशब्दस्य प्रयोक्तुं शक्यत्वेपि तथा प्रयोगाभावान्नास्ति छाया हीत्यादि पद्ये ग्रहणकल्पनावकाश इति सिद्धम्।

कालिदासस्तु राहुणैव शशिग्रासं सममंस्त न तूपरागे क्षितिच्छायायाश्चन्द्रबिम्बे संक्रातत्वम्। यथा रघुवंशे द्वितीयसर्गे (39) ऊनचत्वारिंशं पद्यम्–

**तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।**
**उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव।।** इति।

सुरद्विषो राहोरिति मल्लीनाथः।

8. अन्ये तु संस्कृतभाषाया अभ्युदयस्य समयद्वयं परिकल्प्य द्वितीये समये श्रीमान्कालिदासः प्रादुर्बभूवेत्याहुः। तयोश्च समययोः प्रथमो वेदादि समुत्पत्तेरर्थादतीव प्राचीनः। द्वितीयस्तु ख्रिस्तीयद्वितीयशताब्द्यामेव। यदा यदा किल यस्यां यस्यां भाषायां सरसरमणीयानां नव्यकाव्यानां प्रणेतारः कविप्रवराः समुद्भवन्ति परःसहस्राश्च रसविदस्तद्भाषाभिज्ञाः प्रादुःषन्ति तदा तदा तस्या भाषाया अभ्युदय इत्यवबोध्यम्। संस्कृतभाषाया अभ्युदयस्याद्ये समये तु नास्त्येव संभवाशङ्कापि कालिदासस्य। द्वितीये तु तस्योत्पत्तेरभ्युपगमेऽर्थदिव ख्रिस्तीयद्वितीयशताब्द्यां कालिदासावस्थानं स्फुटीभवति। इति तेषां मतम्।

अत्रोच्यते। यदुच्यते श्रीमद्भिः ख्रिस्तीयद्वितीयशताब्द्यां संस्कृतभाषायाः पुनरभ्युदय इति नैतदंशतोऽपि विदुषां प्रमोदं पुष्णाति। नापि च प्रमाणानुगतम्। दृश्यन्ते हि ख्रिस्तीयद्वितीयशताब्द्याः पूर्वमपि प्रथमशताब्द्यादौ प्रादुर्भूता हृदयङ्गमनव्यकाव्यप्रणेतारः कवयः। ख्रिस्तीयप्रथमशताब्द्यामपि हि विरचयाञ्चकाराश्वघोषः काव्यं बुद्धचरितं नाम। श्रूयते च भगवता पतञ्जलिनापि मनोहरतरं प्राणायि काव्यमिति। स च पतञ्जलिः ख्रिस्तीयवत्सरारम्भतः पूर्वं चतुश्चत्वारिंशदुत्तरशततमेब्दे भारतवर्ष मण्डयामासेति पुरावृत्तविदः प्राहुः। अश्वघोषप्रणीते च बुद्धचरिते सन्दृश्यते भूयसां कालिदासीयवचनानां छाया ततोऽपि चाश्वघोषतः प्राचीनतमत्वं कालिदासस्यायाति। ततश्च निःसारतम एवायं सिद्धान्तो यदुच्यते ख्रिस्तीयद्वितीयशताब्द्यामेव कालिदासोत्पत्तिरिति। यथा च कालिदासीयकल्पनानामेव च्छायाऽश्वघोषेण समाहृता तथा परस्तात्स्फुटीकरिष्यामः। एतच्च ये किल विद्वांसो महाकविष्वपि परस्परच्छायोपजीवित्वमङ्गीकर्तुमिच्छन्ति तन्मतानुरोधेनोक्तम्। येषां पुनः प्रतिपलमुद्भिद्यमाननवपल्लवमनोहरा कालत्रयेऽपि म्लानिवार्ताशून्या प्रतिभावल्ली प्रतिक्षणं प्रसूते नवनवानि परिस्पन्दमानसुधारसनिरन्तराणि जन्मनः प्रभृत्येव परिपक्वानि कालान्तरेऽप्यहीनरसानि काव्यफलानि तेषां यदृच्छया क्वचित्परस्परकल्पनासंवादेऽपि नास्ति परस्परकल्पनापहाराशङ्काया अवसरः स्तोकोऽपीत्येवाभिप्रायोऽस्माकम्।

एवञ्च ख्रिस्तीयद्वितीयशताब्द्यां कालिदासोत्पत्तिरिति निर्मूलमेवेदं वचनम्। इति संस्कृतभाषाभ्युदयविचारः।

९. केचित्पुनः संशयाना इव भगवतः कालिदासस्यापि प्रतिभाविस्फूर्तौ किमपि विलक्षणमेव प्रकारान्तरमवलम्ब्य महाकवेरस्य समयं निर्णेतुमिच्छन्ति। तथाहि। आसीत्किल प्रथितमतिवैभवो बौद्धपण्डितः कोऽप्यश्वघोषो नाम। यः किल ख्रिस्तीयप्रथमशताब्द्यामलञ्चकार भूवलयम्। अस्ति चैतत्प्रणीतं काव्यं बुद्धचरितं नाम। यत्र किल विद्यमानानि भूयांसि पद्यानि कालिदासीयानां तत्तेषां पद्यानामाशयमनुहरन्तीव लक्ष्यन्ते। विभिन्न कविनिर्मितानां पद्यानां परस्परसाजात्ये शक्यत एव तन्निर्मातुः कविद्वयस्य पूर्वापरीभावः कल्पयितुम्। यो हि यस्य कवेः पद्यगतमाशयमात्मनः पद्ये ग्रथ्नाति स तस्मात्कवेरर्वाचीनो भवति। यथा कालिदासाद्भवभूतिः। यस्य चैकस्य कवेर्निर्णीतः समयः स एव प्राचीनो यस्य पुनर्न शक्यते प्रमाणान्तरेण निर्णेतुं स ततोऽर्वाचीनः। प्रकृते तु बुद्धचरितप्रणेतुरश्वघोषस्य समयः प्रमाणान्तरेण निर्णीतः। कालिदासीयेषु च पद्येषु तत्पद्यच्छायाया अवेक्ष्यमाणत्वाच्छक्यते कालिदासस्याश्वघोषतः पराचीनत्वं कल्पयितुम्। यथा च बुद्धचरितच्छायोपजीवित्वं कालिदासीयपद्यानां तथाऽत्र संक्षेपत उदाहर्तुमिच्छामः। तथाहि—

| अश्वघोषस्य बुद्धचरिते— | कालिदासस्य रघुवंशे— |
|---|---|
| यथावेदनां दिवि देवसङ्घा<br>दिव्यैर्विशेषैर्महयां च चक्रुः। | तं पातयां प्रथममास पपात पश्चात्।<br>प्रभ्रंशयां यो नहुषं चकार।<br>संयोजयां विधिवदास समेतबन्धुः।। |

अत्र यथा बुद्धचरित एवमेव रघुवंशेऽप्यनुप्रयुज्यमानस्य कृञादेर्व्यवधानेन प्रयोगो द्रष्टव्यः।

| | |
|---|---|
| क्वचित्प्रदध्यौ विललाप च क्वचित्<br>क्वचित्प्रचस्खाल पपात च क्वचित्। | क्वचित्पथा सञ्चरते सुराणां<br>क्वचिद्घनानां पततां क्वचिच्च। |

अत्रोभयो रचनायाः क्वचित्पदघटिततया सादृश्यं सुस्पष्टम्।

| | |
|---|---|
| तथापि पापीयसि निर्जिते गते<br>दिशः प्रसेदुः प्रबभौ निशाकरः।<br>दिवो निपेतुर्भुवि पुष्पवृष्टयो<br>रराज योषेव विकल्मषा निशा।। | दिशः प्रसेदुर्मरुतो ववुः सुखा<br>प्रदक्षिणार्चिर्हविरग्निराददे।<br>बभूव सर्वं शुभशंसि तत्क्षणं<br>भवो हि लोकाभ्युदयाय तादृशाम्।। |

कुमारसम्भवे—

वाता ववुः स्पर्शसुखा मनोज्ञा
दिव्यानि वासांस्यवपातयन्तः।
सूर्यः स एवाभ्यधिकं चकाशे
जज्वाल सौम्यार्चिरनीरितोऽग्निः।।

वाता ववुः स्पर्शसुखाः प्रसेदु-
राशा विधूमो हुतभुग्दिदीपे।
जलान्यभूवन्विमलानि तत्रो-
त्सवेऽन्तरिक्षं प्रससाद सद्यः।।

अत्र च मङ्गलसमुद्भवे दिक्प्रसादादीनां वर्णनस्योभयत्रापि समानत्वम्।

मेघदूते—

द्वन्द्वानि सर्वस्य यतः प्रसक्ता-
न्यलाभलाभप्रभृतीनि लोके।
अतोऽपि नैकान्तसुखोऽस्ति कश्चि-
न्नैकान्तदुःखः पुरुषः पृथिव्याम्।।

कस्यैकान्तं सुखमुपनतं
दुःखमेकान्तो वा।

रघुवंशे—

कामेष्वनैकान्तिकता च यस्मा-
दतोपि ये तेषु न भोगसंज्ञा।
पार्श्वात्सुतो लोकहिताय जज्ञे

एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु।।
भवो हि लोकाभ्युदयाय तादृशान्।

अत्र सुखदुःखादीनामस्थिरत्वस्योभयत्राप्येकान्तपदघटित्वेनैव वर्णनम्। अत्यन्तार्थ एकान्तशब्दोपनिबन्धश्च तुल्यः।

सन्ध्याभ्रजालोपरिसंनिविष्टम्
कल्पेष्वनेकेष्विव भावितात्मा
दीप्त्या च धैर्येण श्रिया रराज।

सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः।
भावितात्मा भुवो भर्तुः रराज धाम्ना रघुसूनुरेव।

एषु चोदाहरणेषु सन्ध्याभ्रेत्यादिसमानशब्दोपनिबन्धः।

सहि स्वगात्रप्रभयोज्ज्वलन्त्या
दीपप्रभां भास्करवन्मुमोष।

सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपाः सहसाहतत्विषो
बभूवुगलेख्यसमर्पिता इव।।

सचन्दना चोत्पलपत्रगर्भा
पपातवृष्टिर्गगनादनभ्रात्।

अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपातविद्याधरहस्तमुक्ता।।

अत्र दीपप्रभाया मन्दीकरणं गगनतः कुसुमवर्षश्चेत्युभयत्रापि समानार्थग्रन्थनम्।

बभूव पक्ष्मान्तरिवाञ्चिताश्रुः।
सगद्गदं बाष्पकषायकण्ठः।

उभावलंचक्रतुरञ्चिताभ्याम्।
चूताङ्कुरास्वादकषायकण्ठः।

अत्रोभयत्रापि समानशब्दत्वम्।

विहाय राज्यं विषयेष्वनास्थः
तीव्रैःप्रयत्नैरधिगम्य तत्वम्।
जगत्ययं मोहतमो निहन्तुं
ज्वलिष्यति ज्ञानमयो हि सूर्यः

अपरो दहने स्वकर्मणां
ववृते ज्ञानमयेन वन्हिना।
विषयेषु विनाशधर्मसु
त्रिदिवस्थेष्वपि निःस्पृहोऽभवत्।।

अत्र बिम्बप्रतिबिम्बभूत इवार्थः प्रतिभात्युभयत्र।

| | |
|---|---|
| रूपस्यास्यानुरूपेण **दाक्षिण्येना**नुवर्तितुम्। | तस्य **दाक्षिण्यरूढेन** नाम्नामगधवंशजा।। |
| विश्वाच्याऽप्सरसासार्ध रेमे **चैत्ररथे** वने।। | वृन्दावने **चैत्ररथा**दनने निर्विश्यतां सुन्दरि यौवनश्रीः। |
| **मेघस्तनित**निर्घोषः कुमारः प्रत्यभाषत।। | **जीमूतस्तनित**विशङ्किभिर्मयूरै रुद्ग्रीवैरनुगमितस्य पुष्करस्य।। |
| **नावजानामि** विषयान्। | **अवजानासि** मां यस्मात्। |
| विषयेषु प्रसक्तिर्वा | अथ वीक्ष्य रघुः प्रतिष्ठितं |
| युक्तिर्वा **नात्मवत्तया**। | प्रकृतिष्वात्मजमा**त्मवत्तया**।। |
| विवेश**धिष्ण्यं** क्षितिपालकात्मजः। | अमी वेदीं परितः क्लृप्त**धिष्ण्याः** |
| **अवतीर्य** ततस्तुरङ्गपृष्ठात्। | **तेनावतीर्य तुरगा**त्प्रथितान्वयेन |
| वर**कालागुरुधूम**पूर्णगर्भम्। | प्रसाद**कालागुरुधूम**राजिः। |
| परमैरपि दिव्य**तूर्य**कल्पैः। | **तूर्य**स्वने मूर्छति मङ्गलार्थे। |
| स्तनविस्रस्त**सितांशुका** शयाना। | **सितांशुका** मङ्गलमात्रभूषणा। |
| **समवेक्ष्य** ततश्च ताः शयानाः। | नृपतिः प्रकृतीर**वेक्षितुम्**। |
| **प्रतिगृह्य** ततः स **भर्तुराज्ञाम्**। | **प्रतिगृह्य** वचो विससर्ज मुनिम्।। |
| | तथेति शेषामिव **भर्तुराज्ञाम्**।। |
| **कनकवलय**भूषित**प्रकोष्ठैः**। | नीत्वा मसान् **कनकवलय**भ्रंशरिक्त**प्रकोष्ठः**। |
| भार्गवस्या**श्रमपदं**। | वामना**श्रमपदं** ततः परं। |
| **विप्रयोगः** कथं नस्याद् भूयोपि स्वजनादिभिः। | नाप्यन्यस्मात्प्रणयकलहा**द्विप्रयोपपत्तिः**। |
| विपानशयनार्ह हि सौकुमार्यमिदं क्व च। | क्व बत हरिणकानां जीवितं चातिलोलं। |
| खरदर्भाङ्कुरावती तपोवनमही क्व च।। | क्व च निशितनिपाता वज्रसाराः शरास्ते।। |
| त्यज नरवर शोकमेहि धैर्य | न पृथग्जनवच्छुचो वशं |
| कुधृतिरिवार्हसि धीर नाश्रु मोक्तुम्। | वशिनामुत्तम गन्तुमर्हसि। |
| स्रजमिव मृदितामपास्य लक्ष्मीं | उपस्थितां पूर्वमपास्य लक्ष्मीं |
| भुवि बहवो हि नृपावनान्यभीयुः। | वनं मया सार्धमपि प्रपन्नः। |
| इक्ष्वाकुवंशप्रभवस्य राज्ञः। | इक्ष्वाकुवंशप्रभवः कथं त्वाम्। |
| अपश्यतां तं वपुषा ज्वलन्तम्। | ज्वलन्निव ब्रह्ममयेन तेजसा। |
| पुनर्वसू योगगताविवेन्दोः। | गां गताविव दिवः पुनर्वसू। |
| नदीरयः कूलमिवाभिहन्ति। | जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः। |
| अगस्त्यजुष्टां दिशमप्रयाताम्। | अगस्त्याचरितामाशाम्। |
| बुद्धः परप्रत्ययतो हि को व्रजेत्। | मूढः परप्रत्ययनेयबुद्धिः। |
| तं द्रष्टुं न हि पथि शेकतुर्न मोक्तुम्। | न च खलु परिभोक्तुं नैव शक्नोमि हातुम् |
| चलस्य तस्योपरि शृङ्गभूतं | पर्यङ्कबन्धस्थिरपूर्वकाय- |
| शान्तेन्द्रियं पश्यति बोधिसत्वम्। | मृज्वायतं सन्नमितोभयांसम्। |
| पर्यङ्कमास्थाय विरोचमानं | उत्तानपाणिद्वयसन्निवेशा- |
| शशाङ्कमुद्यन्तमिवाभ्रकूटात्।। | त्प्रफुल्लराजीवमिवाङ्कमध्ये।। |
| गात्रं हि ते लोहितचन्दनार्ह | किमित्यपास्याभरणानि यौवने |

काषायसंश्लेषमनर्हमेतत्।
हस्तः प्रजापालनयोग्य एष
भोक्तुं न चार्हः परदत्तमन्नम्।।
त्रिवर्गसेवां नृप यत्तु कृत्स्नतः
परो मनुष्यार्थ इतित्वमात्थ माम्।
अनर्थ इत्यात्थ ममार्थ दर्शनं
क्षयी त्रिवर्गो हि नचापि तर्पकः।।
नाश्चर्यं जीर्णवयसो यज्जग्मुः पार्थिवा वनम्।
अपत्येभ्यः श्रियं दत्वा भुक्तोच्छिष्टामिव स्रजम्।।
दुर्लभं शान्तमजरं परं तदमृतं पदम्।

शैलेन्द्रपुत्रीं प्रति येन विद्धो
देवोऽपि शम्भुश्चलितो बभूव।
न चिन्तयत्येष तमेव बाणं
किं स्यादचित्तो न शरः स एषः।।
सोऽप्राप्तकालो विवशः पपात।

मोघं श्रमं नार्हसि मार कर्तुं
हिंस्रात्मतामुत्सृज गच्छ शर्म।
नैष त्वया कम्पयितुं हि शक्यो
महागिरिर्मेरुरिवानिलेन।।

धृतं त्वया वार्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते।।
पुरुषस्य पदेष्वजन्मनः
समतीतं च भवच्च भावि च।
स हि निष्प्रतिघेन चक्षुषा
त्रितयं ज्ञानमयेन पश्यति।।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये।
गलितवयसामिक्ष्वाकूणा मिदं हि कुलव्रतम्।।
दयालुमनघं स्पृष्टं पुराणमजरं विदुः।

हरस्तु किञ्चित्परिलुप्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि।।
विवशा कामवधूर्विमोहिता।

अलं महीपाल तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।।
न पादपोन्मूलनशक्तिरंहः
शिलोच्चये मूर्छति मारुतस्य।।

एतेषु च पद्येषु यथायथं पदादीनामाशयस्य चानुहरणं द्रष्टव्यम्।

यत्र च पद्यरचनासु कविद्वयस्य परस्पराशयानुवादकत्वं प्रतिभासते तत्र यस्य प्रमाणान्तरेण निर्णेतुं शक्यः समयस्ततोऽर्वाचीनत्वमपरस्येति सिद्धान्तः। अश्वघोषस्यैव तु निर्णीयते समयः प्रमाणैरन्यैः। अतः प्रमाणान्तरैरनिर्णीसमयः कालिदासस्ततोऽर्वाचीन इति निःसन्देहम्। ततश्च कालिदासस्य ख्रिस्तीयद्वितीयशताब्द्यां समुद्भूतत्वमबोद्धव्यम्। न चाश्वघोष एव कालिदासपद्यच्छायोपजीवीति विप्रतिपत्तव्यम्। अश्ववोषस्यैवातिप्राचीनतया परपद्यच्छायोपजीवित्वस्या-सम्भवात्। न हि प्राचीनेनात्मनः पश्चाद्भाविनां कवीनामाशयस्यानुवादो विधातुं शक्य इति। न च यादृच्छिकमेवेदमर्थ-सादृश्यमिति वक्तव्यम्। यादृच्छिकं हि सकृद्वास्याद्विस्त्रिर्वा स्यान्न तु परः शतानामर्थानां साजात्यं यादृच्छिकमिति कथंचिदपि प्रवक्तुं शक्यम्।

एवं च अनेकेषामर्थानामसकृत्सम्पद्यमानस्य सादृश्यस्य यादृच्छिकत्वेन स्वीकर्तुमयोग्यत्वात्परस्परसजातीयपद्यार्थयोः कव्योरेकस्य प्राचीनत्वसिद्धावपरस्यार्वाचीनताया अर्थादापतितत्वादश्वघोषस्यैव ख्रिस्तीयप्रथमशताब्दीसमुद्भूततया प्राचीनत्वेनार्थादेव ततोऽर्वाचीनस्य कालिदासस्य ख्रिस्तीयद्वितीयशताब्दीसमुद्भूतत्वं दुर्वारमिति पाश्चात्यपण्डितमतमात्राव-लम्बिनः केचिदर्वाचीनाः प्राहुः।

अत्र ब्रूमः। द्विविधस्तावदर्थो भवति अयोनिरन्यच्छायोनिश्चेति। कविप्रतिभामात्रमूलकोऽयोनिः यथा **सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धिनारिङ्गकम्।** इति। अत्र हि वर्ण्यमानं सद्यो मुण्डितमत्तहूणचिबुकस्य नारिङ्गकस्य च परस्परसमानत्वं नान्यपद्यच्छायामुपजीवति कविप्रतिभामूलकं खल्वेतत्। यत्र तु कव्यन्तरप्रतिपादित एवार्थः प्रकारान्तरेणोपवर्ण्यते तत्रान्यच्छायायोनित्वम्। छाया हि सादृश्यं तच्च द्वेधा शब्दमूलकमर्थमूलकं चेति। यथा—

**वपुश्चैव विरूपाक्षं जन्म न ज्ञायते कदा।**
**यदि धनं भवेत्तस्य कथं दिगम्बरो भेवत्।।**
**वरेषु ये गुणाः प्रोक्ता एकोपिन शिवे स्मृतः।।** इति शिवपुराणम्

**वपुर्विरूपाक्षमलक्ष्यजन्मता**
**दिगम्बरत्वेन निवेदितं वसु।**
**वरेषु यद्बालमृगाक्षि मृग्यते**
**तदस्ति किं व्यस्तमपि त्रिलोचने।।** इति कुमारसम्भवम्।।

अत्र कालिदासीयकुमारसम्भवे शिवपुराणस्य शब्दार्थोभयमूलिकाच्छाया। द्विविधमप्येतत्सादृश्यं पारमार्थिकमाभासरूपं चेति द्वेधा। तत्र शब्दसादृश्यं प्रायशो न पारमार्थिकं भवति भवति वा कवित्वमवाप्तुकामानामभ्यस्यतामप्रौढमतीनामेव। न खलु केनापि नव्याः शब्दा विरच्यन्तेऽपि तु कोशादिषु विद्यमाना एव प्रयुज्यन्ते। तेन काव्यद्वये सदृशयोः शब्दयोर्विद्यमानत्वेऽपिच्छायायाः कल्पनं नोचितमिति ब्रूमः। निर्दिष्टपूर्वेषु च श्रीकालिदासाश्वघोषयोः पद्येषु यत्र यत्र शब्दमात्रेण सादृश्यं तत्र तत्रापि तस्य पारमार्थिकत्वाभाव उपरिनिर्दिष्टादेव हेतोर्द्रष्टव्यः। पारमार्थिकं त्वर्थसादृश्यं तेषामेव पद्येषु स्याद्ये खल्वनधिगतकविभावाः पद्यरचनामभ्यस्यन्ति। एषा हि सरणिः पद्यरचनाभ्यासस्य यत्प्रथमतः ठठंठठंठठंठठठंठठं इत्यादिवद्वृत्तानुशीलनार्थमनर्थकान्येव पदान्युपनिबध्यन्ते। अथ स्थिरीभूते वृत्ताभ्यासे यावच्छक्यं कियन्तिचिदर्थवन्ति पदान्युपनिबध्यन्ते ततः परेषां काव्येषु विद्यमान एवार्थः पदान्तरेणानूद्यते तदनु नव्या एवार्थाः कल्प्यन्ते ते च रसादिभिरास्वादनीयतां नीत्वा पद्येषु संग्रथ्यन्ते। अभ्यस्तपद्यरचनानामधिगतकवित्वानां च महात्मनां पद्यरचनास्वन्तिम एव प्रकारो द्रष्टव्यः। उक्तं हि काव्यानुशासने। **क्वचिदालेख्यप्रख्यतया क्वचित्तुल्यदेहितुल्यतयोत्तरोत्कर्षेण महाकविकाव्यानां छायोपजीवनं पादद्वयत्रोपजीवनमुक्त्युपजीवनं समस्यापूरणपदपरिवृत्तिरर्थशून्याभासादयश्च शिक्षेति**। अयं च शिक्षायाः प्रकार आदिम एव वा तत्सन्निहित एव वा काव्ये स्यान्न तु सर्वत्र। सर्वत्रैव चेत्स्यान्न तत्प्रणेता महाकविरिति पदं विन्देत। अश्वघोषप्रणीतानां च पद्यानामर्थस्य सादृश्यं न किल कालिदासस्यैकस्मिन्नेव काव्ये दृष्टमपि तु प्रायः सर्वेष्वपि काव्येषु। सत्येवं कथं नामास्य महाकवित्वं घटतां न खलु महाकवयः परार्थचौरतामङ्गीकुर्वन्तीति। पद्यरचनां शिक्षमाणा अपि पुरुषाः सिद्धे कवित्वे नान्यदीयकाव्यार्थमपहर्तुमीहन्ते। अपहरन्तो ह्यते काव्यचौरा इतिवचनीयभाजनतां गच्छन्ति। एवं च महाकवीनां परकाव्यार्थचौर्ये प्रयोजनाभावात्कालिदासस्य च महाकवितया नाश्वघोषपद्यच्छायोपजीवित्वं कल्पयितुं युक्तम्।

अत्रैवं स्वत एवाशङ्का पुरःसरति। स्यान्महाकवीनां परार्थचौरत्वाभावः प्रत्यक्षतः पुनरत्र दृश्यमानोऽयं कथं नाम शक्यो वारयितुम्। को हि नामोपरिनिर्दिष्टान्यश्वघोषस्य कालिदासस्य च पद्यान्यवलोकमान एकस्यापरकाव्यार्थापहारकत्वं नाङ्गीकुर्यात्। तन्नूनमश्वघोषपद्यच्छायोपजीवी कालिदास इति।

अत्रोच्यते। सत्यम्। अस्ति किल श्रीकालिदासाश्वघोषयोः पद्येषु परस्परं सादृश्यं किन्तु नैतत्परार्थहरणधिया निबद्धमपि तु यदृच्छया स्वयमेव घुणाक्षरन्यायेन सम्पन्नम्। तद्यथा घुणो नाम कश्चित्कीटटो दारूल्लिखति तच्चोलिखितं कुत्रद्विन्यस्ताक्षरमिव प्रतिमाति। न खलु घुणेनाभ्यस्तोक्षरविन्यासो नापि वास्य हृदयेऽक्षरविन्यासवाञ्छास्ति। सम्पद्यन्ते पुनरेतदुल्लिखिता लेखा अक्षराणीव। एवमनिच्छतश्च परार्थोपनिबन्धमनवगच्छतश्च परपद्यार्थ कवेः पद्येषु नवत्वेनोपनिबद्धोप्यर्थः परकविपद्यार्थसदृशतामुपयाति। विदितमेव चैतत्परिचितकवित्वानां विदुषाम्। अत एव भारतवर्षीयाणां कवीनां पद्येषु विद्यमाना एवार्था ईषदिव परिवृत्ताः पाश्चात्यानामपि कवीनां पद्येषु दृश्यन्ते। तथाहि—

* **किमित्यपास्याभरणानि यौवने**
**धृतं त्वया वार्धकशोभि वल्कलम्।।**

* चिपळूणकरस्य श्रीविष्णुशास्त्रिणो निबन्धमालाया उध्दृतानि।

वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते।।

इति कुमारसंभवे श्रीकालिदासः।

As the sweet moon on the horizon's verge,
The maid was on the eve of womanhood.

*Byron*—The dream.

पतन्ति नास्मिन्विशदाः पतत्रिणो
धृतेन्द्रचापा न पयोदपङ्क्तयः।
तथापि पुष्णाति नभः श्रियं परां
न रम्यमाहार्यमपेक्षते गुणम्।। इति।

किरातार्जुनीये भारविः।
———Loveliness

Needs not the foreign aid of ornament
But is, when unadorned, adorned the most.

*Thomson*—Autumn.

आमेखलं सञ्चरतां घनानां
छायामधः सानुगतां निषेव्य।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः।। इति।

कुमारसम्भवे कालिदासः।

As some toll cliff that lifts its awful form
Swells from the vote and midway leaves the storm;
Though round its breast the rolling clouds are spread
Eternal sunshine settles on its head.

*Goldsmith*—Deserted Village.

पतितोऽपि कराघातैरुत्पतत्येव कन्दुकः।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः।।

भर्तृहरिः।

"The watched life of ours is fortune ball,
Twert wealth and poverty she bandies all.
These cast to earth upto the skies rebound;
Those tossed to heaven, come tumbling to the ground."

*Pallassus.*

वचनान्तराणि तु विस्तरभयान्नात्र प्रकाश्यन्ते। यदि कल्पनासादृश्यं नाम नानिच्छाकृतं कुत्रापि प्रत्यक्षीभवेदित्यभिमानस्तदा का गतिरुपरिनिर्दिष्टेषु पाश्चात्यकविवचनेषु विद्यमानस्य सादृश्यस्येति प्रतिवाद्येव तावदाचष्टाम्। वयं तु महाकवीनां यादृच्छिकमप्यर्थसादृश्यं सम्पद्यत एवेति ब्रूमः।

किं च भारतवर्षीयाणां कवीनां काव्ये वर्णनीयानां वर्णनपद्धतेः सुनियन्त्रिततयापि क्वचित्सादृश्यं घटते तथा वसन्ते जात्या विकासाभावः कोकिलरुतं च स्त्रीणां पादाघातादिभिरशोकादीनां विकासो मुखादीनां कमलादिसादृश्यमित्यादि। एतद्विरुद्धस्योपनिबन्धनं तु दोषायैवेत्याचक्षते काव्यविदः। अत एवाश्वघोषपद्येषु विद्यमाना एव कुरुबकविकासादयोऽर्थाः कालिदासीयपद्येषु विद्यमाना अपि नापहृतत्वं ध्वनयन्तीति बोद्धव्यम्। न च वैदिकेष्वेव कविषु कविसमयानुपालनं नान्येष्विति वाच्यम्। वाग्भटहेमचन्द्रादिभिर्जैनैरपि कविसमयानामङ्गीकारात्। ततश्च शब्दसादृश्ये कविसमयमूलकसादृश्ये च सुदूरं निराकृतेऽवशिष्टार्थसादृश्यस्य यादृच्छिकत्वेनाप्यङ्गीकर्तुं शक्यत्वान्नाश्वघोषपद्यार्थापहारी कालिदास इति द्रष्टव्यम्।

अपि च यानि किल काव्यान्यनवरतं पठ्यन्ते कविना तद्गताः खल्वर्थाः कदाचिद्ग्रथ्यमाने काव्ये प्रादुःषन्ति। रुचिरतराण्येव च काव्यानि पठ्यन्ते कविभिर्नैव पुनरसमीचीनानि निर्गुणप्रायाणि वा। अतो यदि कालिदासो बुद्धचरितमेवानुदिनं पठतिस्मेति प्रमाणान्तरेण साध्येत तदा स्वीकरिष्यामस्तद्गतार्थापहारत्वं कथंचित्कालिदासस्य। नैव पुनस्तथात्वे प्रमाणं दृष्टम्। तन्नोचितं बुद्धचरितार्थापहारी कालिदास इत्यभिधातुम्। न चार्थसादृश्यादेव तत्पठनादिकमनुमातव्यमिति वाच्यम्। नीरसतया दोषाकुलत्वाच्च बुद्धचरिते कवीनामादररस्यासम्भवात्। महाकवेश्च रसिकोत्तमस्य श्रीमतः कालिदासस्य नास्ति तत्रादरसम्भवः कथञ्चिदपि। किं चाश्वघोषस्तावद्बौद्धेष्वन्येषु वा न कवित्वेन प्रथितः प्रत्युतदार्शनिकत्वेनैव। कवित्वाभावाच्चायमेव कालिदासीयपद्येषु विद्यमानान्हृदयङ्गमानर्थानपाजहारेति प्रवक्तुं युक्तम्। कवित्वाभावादेव च बुद्धचरिते शय्यादीनां समीचीनत्वाभाव इतिप्रत्यक्षीक्रियतामेतत्सहृदयैः। अतः कालिदासीयसमस्यानिर्णीतत्वेऽपि नाश्वघोषतोऽर्वाचीनत्वं प्रत्युत कालिदासीयपद्यार्थापहारित्वादश्वघोषस्यैव कालिदासतोऽर्वाचीनत्वमिति सम्यगुत्पश्यामः। एवमेव चानुमन्यन्ते वैज्ञानिका अर्वाचीनाः। प्रमाणान्तरेण निर्णीतसमयस्यार्वाचीनत्वमिति तु न न्याय्यं वक्तुम्। वायरनादिभ्योपि कालिदासस्यार्वाचीनतापातात्। एवं चाश्वघोषतः प्राचीनतया कालिदासस्य ख्रिस्तीयप्रथमशताब्दीतोपि प्राचीनत्वं सुस्पष्टम्।

**इति बुद्धचरितार्थापहारविचारः।**

10. केचित्पुनरविभावितविशेषाः प्राचीनमात्रे सुदृढं विश्वसन्तो ज्योतिर्विदाभरणनाम्ना प्रबन्धेन श्रीमतः कालिदासस्यावस्थितिसमयं निर्णेतुमिच्छन्ति। प्राहुश्च। अस्ति किल श्रीकालिदासप्रणीतो ज्योतिर्विदाभरणसंज्ञो ज्योतिःशास्त्रग्रन्थः। तत्र च सुस्पष्टमेवोल्लिखित आत्मनोऽवस्थानावसरः श्रीकालिदासेन। अपहाय ज्योतिर्विदाभरणं कालिदाससमयनिर्णये प्रमाणान्तरान्वेषणं नाम समवधीर्य सदनवर्ति माक्षिकं तदर्थमेव दुर्गमगिरिकाननानुधावनायासः। अहो अनवलोकिताशेषप्रबन्धत्वं नव्यानां यदेते सुस्पष्टमुल्लिखितमपि समयं नावगच्छन्ति। ज्योतिर्विदाभरणं च श्रीमता कालिदासेनैव प्रणीतं तदुक्तं तत्रैव—

**काव्यत्रयं सुमतिकृद्रघुवंशपूर्व**
**जातं यतो ननु कियच्छ्रुतिकर्मवादः।**
**ज्योतिर्विदाभरणकालविधानशास्त्रं**
**श्रीकालिदासकवितो हि ततो बभूव॥**

एवं च रघुवंशादिप्रणेतुरेव ज्योतिर्विदाभरणकर्तृत्वं सुस्पष्टम्। अत्रैवं स्वत एव समुदेत्याशङ्का यदि ज्योतिर्विदाभरणं श्रीमता कालिदासेनैव ग्रथितं यदि च तेनैवोपनिबद्धमिदमुपरितनं पद्यं यदि चात्मग्रथितानां प्रबन्धानां नामान्युपनिबन्धुमभ्यलप्यदयं ततः किमिति निखिलरसिकजनप्रमोदोन्मादप्रदानगृहीतदीक्षाणां शाकुन्तलादीनामत्र नोल्लेखः इति। अत्रोच्यते। यत्खलु यतः प्राचीनं तस्यैव नाम तत्रोपनिबन्धुं शक्येत नान्यस्य। रघुवंशादिकाव्यत्रयं स्मृतिचन्द्रिकाख्यं कर्मविधानशास्त्रमेव चेत्येतावन्त एव प्रबन्धा ज्योतिर्विदाभरणतः पूर्वं प्रणीता इति तेषामेवात्र समुल्लेख इति नास्ति काचिदप्याशङ्का। ननु तथापि यस्यरचनाविशेषेण काव्यत्रयतः प्राचीनत्वमनुमीयते किमिति वा तस्यर्तुसंहारस्य नात्र निर्देश इति चेन्न यत्र हि नागमादिना[1] सिद्धिस्तत्रैवानुमानावसरः। सति चागमे तदनुकूलतयैव वा प्रवृत्तिरनुमानस्य। प्रकृतेचोपरिनिर्दिष्टस्य पद्यरूपागमस्य

1. आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदुः। क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसम्भवात्। इति गौडपादाः।

विद्यमानतया नांशतोऽपि शक्यमृतुसंहारस्य कालिदासविरचितत्वमनुमातुम्।

ज्योतिर्विदाभरणं च यस्मिन्नवसरे प्रणीतं सोऽपि तत्रैवोल्लिखितस्तेन। यथा—

**वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते**
**मासे माधवसंज्ञकेऽत्र विहितो ग्रन्थक्रियोपक्रमः।।** इति।

सिन्धुरादयो ज्योतिषिकाणामङ्कसंज्ञाविशेषाः। सिन्धुरा अष्ट दर्शनानि षट् अम्बरं शून्यं गुणाश्च त्रय इति। अङ्कानां वामतो गतिरिति वामक्रमेणैषां विन्यासे 3068 संख्या निष्पद्यते एतद्वर्षसम्मिते च कलावपयाते ज्योतिर्विदाभरणस्यारम्भः। सम्प्रति च कलेर्द्व्यधिकपञ्चसहस्रवर्षाणि (5002) समतीतानि। एषु च 3068 वर्षेषु व्यवकलितेषु शिष्टानि 1934 वर्षाणि एतावानेव च ज्योतिर्विदाभरणविरचनाया आरभ्याद्यावधि व्यतिक्रान्तः कालः। ततश्च ख्रिस्तशकारम्भतः प्राचीनत्वं सूपपन्नं कालिदासस्य।

प्रकारान्तरेणाप्ययमेव समयः स्फुटीभवति। तथाहि। श्रीमद्विक्रमादित्यमहीपालस्य सभायां प्रविलसत्सु नवसु रत्नेष्वन्यतमः कविः श्रीकालिदासो नाम। तदुक्तं ज्योतिर्विदाभरणे—

**धन्वन्तरिः क्षपणकामरसिंहशङ्कु-**
**वेतालभट्टघटखर्परकालिदासाः।**
**ख्यातो वराहमिहिरो नृपतेः सभायां**
**रत्नानि वै वररुचिर्नव विक्रमस्य।।** इति।।

श्रीमद्विक्रमादित्यराज्यसमय एव च निर्मितं ज्योतिर्विदाभरणं कालिदासेनेत्येतदपि—

**मत्तोऽधुना कृतिरियं सति मालवेन्द्रे**
**श्रीविक्रमार्कनृपराजवरे समासीत्।।**

इत्यतो वचनात्स्फुटीभवति। श्रीविक्रमादित्यश्च ख्रिस्तीयवत्सरारम्भतः पूर्वमेव भारतवर्षमलञ्चकार। तस्य हि साम्प्रतं 1957 तमः संवत्सरः। एवं विक्रमसमानकालिकतयाऽपि कालिदासस्य ख्रिस्तीयशकारम्भतः पूर्वं प्रथमशताब्द्यां विद्यमानत्वं सुस्पष्टम्।

न च वराहमिहिरसमभिव्याहाराद्वराहमिहरस्य चात्यन्तमर्वाचीनतया कालिदासस्याप्यर्वाचीनत्वं दुर्निवारमिति वाच्यम्। बलवता वाचनिकेन प्रमाणेन श्रीकालिदासावस्थितिसमयस्य सिद्धत्वेन कालिदाससमानकालिकस्य वराहमिहिरान्तरस्यैव कल्पयितुं योग्यत्वात्।

एवं च श्रीमत्कालिदासावस्थानावसरस्यानायासमेव सिद्धत्वात्कृतं प्रमाणान्तरान्वेषणायासेनेति।

अत्र ब्रूमः। यदुच्यते श्रीमद्भिर्ज्योतिर्विदाभरणं रघुवंशादिप्रणेत्रैव श्रीमता कालिदासेन विरचितमिति किं वात्र प्रमाणमालोचितं धीमद्भिः ननु ज्योतिर्विदाभरणगतं वचनमेवेति चेद्भ्रान्ताः स्थ। आभ्यन्तरिकैर्वक्ष्यमाणैः प्रमाणैर्ज्योतिर्विदाभरणस्य रघुवंशादिकर्तृविरचितत्वाभावस्य सुस्पष्टत्वात्। तथाहि—

1. * **विषुवद्दिवस**विषये ज्योतिर्विदाभरणकारः प्राह यदा सायनः सूर्यो मेषराशिमुपयाति तदा विषुवं भवतीति। सायनत्वं चायनांशयुक्तत्वम्। अयनांश्च 444 चतुश्चत्वारिंशदुत्तरचतुःशततमे शाके नासीदेव। यच्च ज्योतिर्विदाभरणकारः प्रवदत्ययनांशसमेतत्वं भानोस्तदयमयनांशप्रवृत्त्युत्तरमेव प्रादुर्भूत इति शक्यते प्रत्येतुम्। अयनांशस्य प्रतिवत्सरमेककलाक्रमेण वर्धमानतया दुरुन्नेयत्वाद्वित्रांशस्खलनेऽपि ग्रहगणितादौ स्थूलमानेनान्तरस्यासंलक्ष्यत्वाच्च यदा ततोऽप्यधिकस्यान्तरस्य

* समरात्रिन्दिवे काले विषुवद्विषुवं च तत्। इत्यमरः।

सम्भवस्तदैवायनांशकल्पनायाः प्रादुर्भाव इत्येव युक्तियुक्तमुत्पश्यामः। द्वित्रांशमयं चान्तरं सार्धशतेन शतद्वयेन वा वर्षाणां सम्पद्येत। ततश्च चतुश्चत्वारिंशदुत्तरचतुःशतवत्सरेषु शतद्वयसंकलनायां निष्पन्नेभ्यश्चतुश्चत्वारिंशदुत्तरषट्शतवर्षेभ्यः परं ततः पूर्वं वा सन्निहितेऽवसरे ज्योतिर्विदाभरणकारस्यावस्थानं स्यादिति सम्भाव्यते निश्चीयते च नासीत्ततः पूर्वमिति। विष्णुवराहमिहिरलल्लादिनाम्नामुपनिबन्धश्च प्रमाणमत्रार्थे। एतावता च ख्रिस्तीयसप्तमशताब्द्या उत्तरकालिको ज्योतिर्विदाभरणकार इति।

2. एतेनोल्लिखितैर्नक्षत्रध्रुवकैरपि शक्यते सामान्यतो ज्योतिर्विदाभरणनिर्माणावसरो निर्णेतुम्। निरयणस्पष्टा हि ज्योतिर्विदाभरणवर्तिनो ध्रुवकास्तेभ्यश्चायनांशासनयनं शक्यम्। एतदुपनिबद्धध्रुवकानुसारेणानीतश्चायनांशः सार्धैकादशांशात्मको भवति। उत्तराषाढाध्रुवकावलोकने स्पष्टीभविष्यत्येतत्। अंशश्च षष्टिकलात्मक इति कृतास्तत्कला नवत्युत्तरषट्शतमिताः सम्पद्यन्ते। यस्मिंश्च वत्सरे नासीदयनांशस्तस्मिन्नेतासु कलासु संकलितासु फलितानि चतुस्त्रिंशदुत्तरैकादशशतमितानि वर्षाणि। एतानि च ज्योतिर्विदाभरणविरचनात्पूर्वं शालिवाहनशकारम्भात्प्रभृति व्यतीतानि वर्षाणि। अयनांशो हि प्रतिवत्सरमेककलाक्रमेण वर्धत इत्युक्तमेव प्राक्। अत एव यावत्योऽयनांशस्य कलास्तावन्त्ययनांशप्रवृत्तिदिनाव्द्यतीतानि वर्षाणीति। ध्रुवकेभ्योऽयनांशानयनप्रकारश्च जटिलत्वान्नात्रोपनिबद्धो जिज्ञासुभिरसौ तत्तेभ्यः सिद्धान्तविद्भ्यः स्वयमेवावबोद्धव्य इति। अयं च कालनिर्णयो नातिसूक्ष्ममानेन।

3. यस्तु वैधृतपातविषये निर्दिष्टो नियम एतेन ततः किल सुस्पष्टं सूक्ष्मतया च निर्णीयते ज्योतिर्विदाभरणनिर्माणावसरः। तथा हि ज्योतिर्विदाभरणस्य चतुर्थाध्याये त्रिंशे पद्ये यदैन्द्रस्य तृतीयोंशो व्यत्येति तदा वैधृतपातो भवतीत्युक्तम्। तथा च यदा सूर्याचन्द्रमसोः सङ्कलना सतृतीयांशपञ्चविंशत्यात्मिका भवति तदा वैधृतपात इति पर्यवसितम्। ऐन्द्रो हि षड्विंशो योग इति। तस्मिंश्च प्रतियोगपातांशैः $13\frac{1}{3}^{\circ}$ गुणिते फलितम् $337\frac{7}{9}^{\circ}$ इति। वैधृतपातश्च नाम सायनयोः सूर्याचन्द्रमसोः $360^{0}$ अंशात्मकता। स च द्विगुणोयनांशः सूर्यश्चन्द्रश्चेत्येतेषामेकीभावः। किन्तु ज्योतिर्विदाभरणस्थयोपरिनिर्दिष्टया रीत्या सूर्याचन्द्रमसोः संकलना $337\frac{7}{9}$ स्वरूप सम्पन्ना। ततश्च तस्यां $360^{0}$ अंशेषु व्यवकलितायां यावशिष्टा संख्या सैव द्विगुणितोऽयनांश इति द्रष्टव्यम्। सा च $(360^{0} - 337\frac{7}{9} = 22\frac{1}{2})$ इति। द्विगुणश्चायमयनांश इति द्वाभ्यां भाजिते निष्पन्नं $11\frac{1}{9}$ इति अयमेव चासन्दिग्धो ज्योतिर्विदाभरणकालिकोऽयनांशः। तस्मिंश्च कलास्वरूपतामापादिते $(11\frac{1}{9} \times 60)$ निष्पन्नानि $(666\frac{2}{3})$ अयनांशप्रवृत्तिवत्सरादारभ्य ज्योतिर्विदाभरणकालावधि व्यतीतानि वर्षाणि। तेषु च शून्यायनांशशक-वत्सराणां (444) संमेलने $1110\frac{2}{3}$ इति संख्या निष्पद्यते अयमेव च ज्योतिर्विदाभरणरचनायां शालिवाहनशक इति। ततश्च शालिवाहनशकस्य द्वादशशताब्द्यां ज्योतिर्विदाभरणप्रणेतुरवस्थानमिति निःसन्देहम्।

एवं बलवत्तरैः प्रमाणैर्ज्योतिर्विदाभरणप्रणेतुर्द्वादशशताब्द्यां प्रादुर्भावस्य स्पष्टतया कालिदासस्य च ततोऽतिप्राचीनत्वस्य प्रमाणान्तरैः साधितत्वान्नास्ति तत्प्रणीतत्वं ज्योतिर्विदाभरणस्य।

किं चोपरि निर्दिष्टानां द्वित्राणां ज्योतिर्विदाभरणपद्यानां रचनाप्यनुमापयति तस्य रघुवंशादिकर्तृजन्यत्वाभावम्। क्व खलु सहृदयानां हृदयान्यसङ्गीतकमेव नर्तयन्ती तत्रभवतो महाकवेर्वाणी क्वापि वाऽप्रगल्भमतिभिरपि सन्दूषणीयानि सुदूरोज्झितगुणानि कविंमन्यैरकविभिरप्यनुपनिबन्धनीयानि ज्योतिर्विदाभरणपद्यानि। क्व च मन्दःकवियशःप्रार्थीत्यादिना व्यज्यमानः कविचूडामणेर्विनयातिशयः क्वापि वा काव्यत्रयं सुमतिकृदित्यादिना ध्वन्यमान आत्मनः कृतिं प्रत्यभिमानः। क्व वा निरर्थकपदशून्यानि परिस्पन्दमानरससान्द्राणि तत्तादृशानि रघुवंशादिकाव्यगतानि पद्यानि क्वापि वा रत्नानि वै वररुचिरिति श्रीविक्रमार्कनृपराजवर इत्यादीनि निरर्थकपदजालपरिप्लुतानि वचनानि। तन्न जानीमः कथं वा संस्कृतविन्मात्रैरुपहसनीयमप्येतज्ज्योतिर्विदाभरणं कविप्रकाण्डविरचितमिति स्वीकुर्वते विद्वांस इति।

तदेवं ज्योतिर्विदाभरणस्य श्रीमत्कालिदासप्रणीतत्वाभावेन तस्य तत्कालनिर्णये नास्ति मनागप्युकारित्वं प्रामाण्यं वेति सिद्धान्तः।

ननु मास्तु तावज्ज्योतिर्विदाभरणस्य श्रीकालिदासप्रणीतत्वं तथापि श्रीकालिदासकालनिर्णये तस्य प्रामाण्य-मभ्युपगन्तव्यम्। ज्योतिर्विदाभरणप्रणेता हि कालिदासस्वरूपतामात्मनः कामयते। यश्च यस्य स्वरूपमभिलषति स तस्य स्वाभाविकेतरान्गुणान्सम्पादयति प्रयतते च स्वाभाविकान्सम्पादयितुं जानाति च समीचीनतया तदवस्थानावसरादीन् अन्यथा हि तस्य वञ्चकभावः परिस्फुटतामुपगच्छेत्। अतो ज्योतिर्विदाभरणकारेणापि कालिदासात्मकत्वमुपलब्धुकामेन पारमार्थिकं कालिदासावस्थितिसमयादिकं समवबुद्धमित्यवश्यमङ्गीकरणीयम्। अन्यथाऽऽपाततो विरोधस्य प्रत्यक्षीभावे प्रतारकतायाः प्रस्फुटतापत्त्याऽनादरापत्तेः। तदवगतवानेव कालिदासावस्थानसमयं ज्योतिर्विदाभरणकारस्तमेव चोपनिबबन्ध स्वीयप्रबन्ध इति न्याय्येवेयं कल्पनेति चेद्भवतु केषाञ्चित्सन्तोषाय तस्या अङ्गीकारः। किन्तु एकत्र प्रकटीभूत-प्रतारकत्वस्यान्यत्र विश्वासयोग्यत्वाभावात्प्रमाणान्तरमन्तराऽनिर्णीते श्रीकालिदासावसरे ज्योतिर्विदाभरणमात्रं प्रमाणीकृत्य प्रवृत्तेरन्याय्यत्वमित्यवबोद्धव्यम्।

### इति ज्योतिर्विदाभरणप्रामाण्यविचारः।

11. केचित्तु शककर्तुः श्रीमतो महीपालशेखरस्य श्रीविक्रमादित्यस्यैव सभायां बभूव कविप्रवरः श्रीकालिदासः। स च महीपतिः ख्रिस्तीयसंवत्सरारम्भतः पूर्वमेव प्रादुर्बभूवेति शक्यते श्रीमतः कालिदासस्यापि ख्रिस्तीयवत्सरारम्भतः प्राचीनत्वं व्यवस्थापयितुम्। इति प्राहुः।

तदपरे न मन्यन्ते। ते हि प्रवदन्ति। आसीत्किल पुरा कष्णीको नाम कोऽपि भूपालः। तमारभ्य तद्वंशे त्रिंशोयं नृपतिः श्रीविक्रमादित्यः। कष्णीकश्च ख्रिस्तीयाष्टसप्ततितमे वत्सरे भारतं वर्षमलमकार्षीत्। तदुत्तरोत्पन्नत्वाच्च नास्ति श्रीविक्रमादित्यस्य ख्रिस्तीयवत्सरारम्भतः प्राचीनत्वम्। काश्मीरदेशीयस्य कस्यचनेतिहासप्रणेतुर्मतानुसारेणेदम्। हुएन्संग (ह्वयनसङ्ग) इत्याख्यस्तु कश्चन चीनयात्रिकः ख्रिस्तीये 580 तमे शाके श्रीशिलादित्यस्तदुत्तरमेव च श्रीविक्रमादित्यो बभूवेत्याहस्म। ततोऽपि च नास्ति ख्रिस्तीयवत्सरारम्भतः प्राचीनत्वं विक्रमादित्यस्य। किं च श्रीवराहमिहिरसमकालिक एव श्रीविक्रमादित्य इति सुविपुलप्रचारोऽयं प्रवादः प्राचाम्। वराहमिहिरस्त्वाचार्यः ख्रिस्तीयषष्ठशताब्द्यामेव प्रादुर्भूत इत्यथदेव तत्समानकालिकस्य श्रीविक्रमादित्यस्यापि ख्रिस्तीयषष्ठशताब्द्यामेव प्रादुर्भूतत्वमायातम्। अपि च विक्रमादित्यस्य श्रीकालिदाससमानकालिकत्वाङ्गीकारेऽपि नैव सिध्यति प्राचीनत्वम्। कालिदासकृतानां तत्तद्वर्णनानां षष्ठशताब्दीविद्यमानवस्तु-विषयत्वस्यानुमीयमानतया ततः प्राचीनत्वस्य वक्तुमशक्यत्वात्। अतश्च ख्रिस्तीयसंवत्सरारम्भतः सुतरामर्वाचीनः श्रीमान्विक्रमादित्य इति।

अपरे तु तमेवार्थं भङ्ग्यन्तरेण साधयन्तः प्राहुः। सुप्रथिता किलेयं प्रवृत्तिरितिहासनिबन्धेषु श्रीमान्विक्रमादित्यो म्लेच्छाञ्जिगायेति। समरश्चायं कोरूरनगरसमीपत एव सम्पन्नः। अस्तिचात्रार्थे प्रमाणं तदानीन्तनः शिलालेखो यतः किल संभाव्यते म्लेच्छपराजेतृत्वं विक्रमादित्यस्य। कोरूप्रधनं च ख्रिस्तीयषष्ठशताब्द्यामेव सम्पन्नमिति च प्रोचुरितिहासविदः। तथा च सर्वथा ख्रिस्तीयषष्ठशताब्द्येव समयो धरां पालयतः श्रीमतो विक्रमादित्यस्येति संसिद्धमिति प्रभाषन्ते।

अत्रोच्यते। विक्रमादित्य इति किं तावदेक एवभूपालः स्वीक्रियते बहवो वा। नाद्यः प्रमाणाभावात्। सम्भवन्ति हि समाननामानः समानगुणाः प्रथितयशसश्च भूयांसः पुरुषाः। कति हि नाभूवन्कालिदासाभिधानाः कवयोऽत्र भारते वर्षे कति च न प्रादुःषन्ति स्म श्रीमन्तः शङ्कराचार्याः कति च नालंचक्रुर्धरातलं जयदेवा कति च नोद्बभूवुस्त्रिविक्रमाभिख्याः कवयः। भूपालेष्वपि सन्त्येव भूयसां सदृशानि नामानि। महाराष्ट्रराजवंशे हि भूयांसः शिवराजनामानः पुरुषा दृश्यन्ते। यद्यपि नैते सर्वेऽपि गुणतः समाना एव तथापि नास्त्येषां हीनत्वम्। एवं श्रीमद्विक्रमादित्यभूपाला अपि बहव एवात्र देशे प्रादुर्बभूवुरित्येव युज्यते वक्तुम्। न च विक्रमादित्य इति विक्रम आदित्य इवेत्यर्थकोऽयमुपाधिरेवेत्याशङ्कनीयम्। प्रमाणाभावात्। समुल्लिखितं हि भूयिष्ठैः प्रबन्धकारैर्विक्रमादित्य इतिपदं संज्ञात्वेनैव। नामैकदेशे नाम ग्रहणमिति न्यायमनुसरन्तः पुनः केचिद्विक्रम इत्येव पदं संज्ञात्वेन स्वीकुर्वन्ति। केचित्तु संज्ञावाचिनोऽपि पदस्योत्तरपदपरिवृत्तिसहिष्णुता-मङ्गीकुर्वाणा विक्रमार्क इत्यर्थे विक्रमादित्य इत्यपि प्रयुञ्जते। तथा च प्रयोगाः—

**नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः।** इति।।
**पायादाचन्द्रतारं जगदिदमखिलं विक्रमादित्यदेवः।।** इति।।

वचनद्वयमप्येतच्छ्रीमतः प्रामाणिकोत्तंसस्य विज्ञानेश्वरस्यैव। तेन विक्रमार्कपदघटितस्यार्कपदस्यपरिवृत्तिसहिष्णुत्वं द्रष्टव्यम्।

**समारूढे पूतत्रिदिववसतिं विक्रमनृपे।** इति।।
**युधिष्ठिरो विक्रमशालिवाहनौ।** इति च।।

एषु च वचनेषु विद्यमानानि विक्रमादिपदानि संज्ञामात्राण्येव नैव पुनरुपाधिभूतानीति जानीयुरेवेदं संस्कृताभिज्ञाः। एवं च बहव एव विक्रमार्काभिधानाः क्षितिपतयो धरामण्डलं मण्डयामासुरित्यवश्यमङ्गीकरणीयम्। एकमात्रस्य तु विक्रमार्कस्याङ्गीकारे विभिन्नेषु तत्तेष्ववसरेषु विक्रमादित्यस्यावस्थानवबोधयन्ति वचनानि व्याकुप्येयुः। सन्ति चैवंविधानि वचनानि। विज्ञानेश्वरो हि कल्याणपुर आत्मनः समानकालीनं विक्रमार्क प्राह। यथा—

**नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं**
**नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः।**
**विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदीयोपमा-**
**माकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्रयम्।।** इति।।

अमितगतिस्तु सुभाषितसन्दोहे मुञ्जभूपालराज्यावसरात्सहस्राब्द्याः पूर्वमेव श्रीमतो विक्रमादित्यस्यावस्थानमाह। यथा

**समारूढे पूतत्रिदिववसतिं विक्रमनृपे**
**सहस्रे वर्षाणां प्रभवति च पञ्चाशदधिके।**
**समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ**
**सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम्।।** इति।।

कथासरित्सागरे त्वन्य एव विक्रमो दृष्टः। एवं चावश्यमङ्गीकरणीयं विक्रमार्काणां बहुत्वमिति।

एतेनानुयोगघटित उत्तर एव पक्षः साधीयानिति संसिद्धम्। ततश्च कष्णीकाद्युत्तरकालिकस्यापरस्यैव विक्रमार्कस्याङ्गीकारेण शकप्रवर्तयितुः श्रीविक्रमनृपस्य ख्रिस्तीयवत्सरतः प्राचीनत्वे नैव किमपि बाधकं पश्यामः। नापीतिहासप्रबन्धेषु कष्णीकाद्युत्तरकालिकस्यैव विक्रमादित्यस्य शककर्तृत्वमिति क्वाप्युल्लिखितमिति किल सम्भाव्यतेऽस्माभिः। यदि त्यदलेखिष्यत तदा नूनं निरदेक्ष्यत श्रीविक्रमार्कमर्वाचीनेऽवसर आकर्षद्भिः स्वीय प्रबन्धेषु। यच्च नैव निरदेशि तत्प्रसन्न एवास्मदीयस्तर्क इति। एवं हुएनसंगनिर्दिष्टः शिलादित्योत्तरकालिकोऽपि श्रीविक्रमादित्यो विभिन्न एव शकप्रवर्तयितुः। वराहमिहिरस्य तु श्रीविक्रमार्कसमानकालिकत्वं लोकवादमात्रावलम्बनमिति नाङ्गीक्रियते कैश्चित्। परे तु वराहमिहिरद्वयमेव स्वीकुर्वाणाः ख्रिस्तीयप्रथमशताब्द्यां षष्ठ्यशताब्द्यां च व्यवस्थापयन्ति तयोरवस्थानम्। तदेतन्नवरत्नविचारावसरे प्रपञ्चितमेवास्माभिः। कालिदासीयवर्णनानां षष्ठशताब्दीयवस्तुविषयत्वमिति तु भ्रममूलकमेव। प्रदर्शितपूर्वैः प्रमाणैः कालिदासस्य ख्रिस्तीयवत्सरारम्भतः प्राचीनत्वस्य सिद्धत्वात्। तथा च श्रीमद्विक्रमार्कस्य कालिदाससमानकालिकत्वमङ्गीकुर्वद्भिरनिच्छद्भिरप्यवश्यं स्वीकरणीयं विक्रमादित्यस्य ख्रिस्तीयशकारम्भतः प्राचीनत्वमिति सिद्धम्।

एवं च नैव श्रीविक्रमार्कस्य ख्रिस्तीयवत्सरारम्भतोऽर्वाचीनत्वमापादयितुं शक्यम्।

कोरूरयुद्धविषये तु ब्रूमः। किंतावत्प्रमाणं कोरूरसन्निकटे म्लेच्छानां यः पराजेता स एव शकप्रवर्तयिता श्रीमान्विक्रमार्क इत्यत्र। ततः पूर्वेषु ताम्रपटशिलालेखादिषु विक्रमार्कनाम्नोऽवलोकनमेवेति चेत्कुत्र वाऽयं नियमो

यत्सर्वेषामपि नृपाणां शिलालेखादिभिर्भाव्यमिति। पद्धतिरेव नन्वियं प्राचीनभूपालानां शिलालेखादिनिर्माणं नामेति चेत्कुत्रवेदानीं सर्वेषामपि प्राचीननृपालानां शिलालेखाः। अद्यापि तदधिगमाभाव एव तदनुपलम्भे हेतुरिति चेत्किमिति तत एव हेतोर्न साध्यते श्रीमता विक्रमादित्येन निर्मितानामपि शिलालेखानामस्तित्त्वम्। तदहो सर्वथा प्राचीनमतासहिष्णुत्वं च भवतो विप्रतीपदर्शित्वं च। किं च कोरूरशिलालेखे 601 तम एव श्रीविक्रमार्कशकवत्सरोऽङ्कित इति श्रूयते। यदि त्वितिहासविदः ख्रिस्तीयषष्ठशताब्द्यामेव कोरूरप्रधनमित्याचक्षते यदि च तत्स्मरणचिह्नभूतेऽस्मिञ्शिलालेखे 601 तमो विक्रमशकाब्द उल्लिखितस्तदा किमिति वा नाङ्गीकरणीयं सरलमतिभिः ख्रिस्तीयवत्सरारम्भतोऽति प्राचीन एव श्रीमान्विक्रमादित्य इति। यत्त्वत्र केचित्समुन्नतंमन्याः प्राहुः कोरूरायोधनसमय एवावतिष्ठमानो विक्रमादित्य आत्मनः शकाब्दस्य सर्वतोऽपि प्राचीनत्वं प्रख्यापयितुकामः स्वीयं प्रथममेव वत्सरं 601 तम इति समुदलेखीदिति। तदेदुज्जृम्भणं नाम विवेकशून्याभावस्य। अहो अलौकिकं बुद्धिवैभवमेतेषाम्। यद्भगवति यशोनिधावपि श्रीविक्रमादित्ये प्रतारकत्वमारोपयितुमहीन्ते। न चैतदंशतोऽपि सामञ्जस्यमावहति। कस्तावद्धेतुरात्मनः शकस्य प्रथममपि वत्सरं 601 तमत्वेन निर्दिशतो विक्रमादित्यस्य। प्राचीनत्वेनात्मनः प्रकाशनमेवेति चेत्किमिति वा परःसहस्रत्वमेव नारोपितमात्मनो शकस्य प्रथमाब्द एतेन। यो हि प्राचीनत्वमेव निमित्तीकृत्यात्मनः शकारम्भसंवत्सरं परिवर्तयितुमीहेत स किल प्रतारकशिरोमणिः सुतरामेव प्राचीनत्वमारोपयेत्तस्मिन्नैव पुनर्मनागेवेति। प्रथितयशा धार्मिक धुरीणश्च श्रीमान्विक्रमादित्यः कथं वा साधुजनविनिन्दितममुं पन्थानमनुवर्तेतेति विचार्यतां तावद्धियं सूक्ष्मीकृत्य। यत्तूच्यते कथमन्यथा कुत्रापि नोपलभ्येत श्रीविक्रमार्कस्य 601 तमतः प्राचीनशकाब्दनिर्देश इति। तदपि मोहमात्रनिबन्धनमेव। विद्यन्ते हि तथाविधाः शिलालेखादयश्चेतिहासप्रमाणानि च येषु किल सुस्पष्टमुल्लिखितः श्रीमतो विक्रमार्कस्यैकाधिकषट्शततमादपि प्राचीनो वत्सरः। प्रकाशितो हि डाक्टरबुल्लर इत्याख्येन पाश्चात्यविदुषा सामान्यदुर्गवर्ती कश्चन ताम्रपटो येन शक्यते सुव्यक्तमेव श्रीविक्रमार्कस्य षष्ठशताब्दीतोऽपि प्राचीनत्वमवबोद्धुम्। व्यवस्थापितं चैवमेव पण्डितेनैतेन। द्रढयति चैतदेव मतं डाक्टरपीटरसनो (पीतरशनः) नाम पाश्चात्यदेशीयः संस्कृतपण्डितोत्तंसः। स किलात्रार्थे मन्देसरीयं किमप्यैतिहासिकं वर्णनं प्रमाणयति। तत्र हि चतुर्नवत्युत्तरचतुःशततमो (494) मालवीयः शको निर्दिष्टः। नास्ति खल्वपरो मालवीयः शको नाम। किन्तु मालवाधिपतेस्तत्रभवतो विक्रमादित्यस्यैवायं शक इति प्रतीयते। उपरि निर्दिष्टे च शकाब्दे श्रीमान्कुमारगुप्तो नाम धरापतिः क्षितिं पालयामास। प्रमाणान्तरैरपि सोऽयं शकाब्दः श्रीमतो विक्रमस्यैवेति साधितं पीतरशनमहाभागेन। फ्लीटाख्यश्चापरो यौरोपीयः पण्डितः सरणिमेनामेवानुसरन्स–प्रमाणममुमेवार्थं स्थिरीकुरुते। एवं च तेषामपि मतेन निःशैथिल्यमेव संसिद्धं षष्ठशताब्द्याः प्राचीनः श्रीमान्विक्रमादित्य इति येषां किल वचसि श्रुतिवचन इवैकान्ततः श्रद्दधते केचिदर्वाचीनाः। एवं च यथा पीतरशनाद्यधिगतैः प्रमाणैः सप्तमशताब्दीतः सुतरां प्राचीनत्वमवगम्यते श्रीविक्रमशकाब्दस्य एवं लेखान्तराद्यधिगमे ततोऽपि प्राचीनत्वं सशिरःश्लाघमेवाङ्गीक्रियेत प्रतिवदद्भिः। भवेयुश्च तथाविधा लेखाः किन्तु नाधिगम्यन्त इदानींतनैरद्याप्येत इति नैवावतैव तेषामस्तित्वाभावः साधयितुं शक्यः। न हि मेघपटलतिरोहितमण्डलोऽपि भगवान्प्रचण्डकरो नास्तीति वक्तुं युज्येत। प्रतिहन्यते हि मानुषाणां दृष्टिरम्भोदनिवहेन नैव पुनरभावं नीयते भगवान्भानुः। एवं तत्तैः प्रतिबन्धकैः परिमेयतया च मानुषप्रयत्नानां प्रत्यक्षतामनुपगतानामपि वस्तूनां सत्युनमानाद्यवसरे नाभावः प्रतिपादयितुं युक्त इत्यवगच्छेयुरेव सूक्ष्मधियः। एवं च ख्रिस्तीयसप्तमशताब्द्यां शष्ठशताब्द्यामेव वा विक्रमार्कप्रादुर्भावस्तेन च प्रथमशकाब्दार्थ एकाधिकषट्शतमवत्सरनिर्देश इत्यादि वचनमेकान्तो निर्मूलं चोन्मत्तप्रलापनिर्विशेषं चेति विज्ञायतां प्रज्ञैः। हन्त भो स्वदेशाभिमानशून्यत्वं केषांचिदर्वाचीनानां भारतवर्ष एव चार्याभिजन एव च प्राप्तजन्मनां पुरुषधुर्याणां यदेते निर्विशङ्कमेवोद्घोषयन्ति प्रतारकत्वं प्रामाणिकोत्तंसानामपि प्राचीनानां भारतवर्षीयाणाम्। प्रकाशयन्ति च सुदूरमुत्सार्य विवेकं किमपि कलुषीभूताशया इव पिशाचोपहता इव ग्रहग्रस्ता इव प्रोन्मादलङ्घिता इव च भारतीयानामाप्ततमानामपि वचसामश्रद्धेयत्वं। नैव मनसि कुर्वन्ति माहात्म्यं तेषां नापि वा विचारयन्ति सत्यमात्रपथानुवर्तित्वमेतेषाम्। केवलं तु कमपि कदध्वानमनुसरन्त आमीलितलोचना इव यथेच्छं प्रलपन्तीत्यहो गरीयस्त्वं कालस्य। प्रियपाठकमहाभागाः जानीमः किल वयं नायमेवंविधायास्तर्जनाया अवसर इत्यप्रकृतगात्रानुसरणं चेदमिति किन्तु निष्कारणमेव प्राचीनेष्वारोपिताः प्रतारकत्वादयो दुर्धर्मा बलवदाक्रम्य हृदयमस्माकं

निःसारयन्ति वदनकुहरादेवंविधानि भागधेयहतकविलासजन्यानि वचनानीति किं वात्र करवाम।

विद्योतन्त एव चापराण्यपि प्रमाणानि येषु निर्दिष्टो विक्रमशकाब्दो बोधयतितमां श्रीविक्रमार्कस्य ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वम्। तथाहि। राजस्थानेतिहासप्रबन्धेषु मेवाडभूपालानां चरितोपवर्णने तद्वंशीयेन नृपतिना श्रीमता विजयदेवेन पञ्चत्रिंशदुत्तरत्रिशतमिते श्रीविक्रमार्कशकाब्दे वल्लभीयो नामात्मनः शकः प्रावर्ति निरमायि च सौराष्ट्रेषु विराटाख्यं नगरमिति प्रतिपादितं प्रतिपादितं च तस्मिन्नेव कुलेऽधिगतजन्मना क्षितिपतिना श्रीकनकसेनदेवेन द्विशततमे विक्रमशकाब्दे सौराष्ट्रा आत्मसादुद्व्यधीयन्तेति। एवं च द्विशततमादीनामपि विक्रमार्कशकाब्दानां तत्र तत्रोल्लेखात्सुतरां प्राचीनत्वं विक्रमार्कस्येति संसिद्धम्। किं च पाण्डवंशीया इन्द्रप्रस्थवर्तिन एव भूपालाः कालेन तुवराभिधानतां जग्मुः। तेष्वेव च विक्रमादित्योऽभूत्। अयमेवाभिनवस्य शकस्य प्रवर्तयिता। एनेनैव च परित्यज्य हास्तिनपुरमुज्जयिन्येव राजधानीभावं गमयता तत्रैव न्युष्यतेति च राजस्थानेतिहासविदः प्रवदन्ति। एवं चेतिहासप्रबन्धावलोकनेनापि श्रीमतोविक्रमादित्यस्य विद्यमानत्वं च ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वं च पर्यवस्यतीति समवबोद्धयम्। इतिहासप्रबन्धाश्चैते सूक्ष्मधिषणत्वेन सुप्रथितैष्टाड्प्रभृतिभिर्यौरोपीयैरेव विद्वद्भिः प्रणीता इत्यपि नैव विस्मरणीयम्।

अथ प्रमाणान्तरेणाप्यर्थमिमं संसाध्य प्राचीनानां भारतीयविदुषां मतमुज्ज्वलीकर्तुमिच्छामः। तथाहि। दिवं गते भगवति महावीरस्वामिनि 470 वत्सरेभ्यः परं श्रीमान् विक्रमादित्यः प्रादुरभूत्। समानकालिकश्चायं श्रीसातवाहनभूपालस्येति प्रबन्धकोषे राजशेखरः प्राह। *हालः शालः सातवाहनः शातवाहनः शालिवाहनश्चेत्यमी पर्यायाः। शालिवाहनश्च ख्रिस्तीयप्रथमशताब्द्यां समुद्भूत इति सुप्रथिततमैवेयं वार्ता सर्वत्र। ततश्च ख्रिस्तीयप्रथमशताब्दवर्तित्वं श्रीमतो विक्रमादित्यस्य प्राप्तम्। एतदप्यापातत एव। वस्तुतस्तु श्रीशालिवाहनशकारम्भात्प्रागेव श्रीविक्रमादित्यो धरातलं मण्डयामासेत्युचितमभिधातुम्। शकप्रवर्तको हि तत्रभवान्विक्रमादित्यः शालिवाहनश्च। तदुक्तम्

**युधिष्ठिरो विक्रमशालिवाहनौ**
**धराधिनायो विजयाभिनन्दनः।**
**ततस्तु नागार्जुनमेदिनीविभु-**
**र्बलिः क्रमात्षट्शककारकाः कलौ।।** इति।।

शककर्तृपदं च निरुक्तं यथा–

**शकान्निहत्य यो राजा शककर्ता स कथ्यते।**
**व्रात्या ये क्षत्रिया भूमौ शकास्ते परिकीर्तिताः।।**
**शकप्रवर्तकान्भूपाञ्शककर्ता निहन्ति यः।।** इति।।

शकानां निहन्ता शकप्रवर्तकनृपनिहन्ता चेति द्वेधा शककर्ता। तत्र श्रीमतो विक्रमार्कस्य शककर्तृत्वं शकाख्यव्रात्यक्षत्रियनिहनननिबन्धनम्। शककर्तृनृपनिहननमूलं तु श्रीशालिवाहनस्येत्याप्ताः। एवं च शालिवाहनतः पूर्वत्वेन पठितस्य नोचितं तत्समानकालिकत्वमभिधातुं सुतरां च न युक्तं ख्रिस्तीयवत्सरारम्भतोऽर्वाचीनत्वं गदितुम्। कलियुगारम्भतश्च यावन्तः शककर्तारस्तावतां शकवत्सरसंख्यानिर्देशोऽपि प्राचीनप्रबन्धेषूपलभ्यमान इदमेव मतं विस्पष्टयति। तथाहि।

**युधिष्ठिराद्वेदयुगाम्बराग्नयः (3044)**
**कलम्बविश्वे (135) ऽभ्रखखाष्टभूमयः (18000)।**

---

* हालः स्यात्सातवाहन इत्यभिधानचिन्तामणिः। सातवाहन एव शालिवाहन इतिवाचस्पत्यम्। हाल इत्यत्रशाल इत्यपि पाठान्तरमिति केचित्। जज्ञे शालमहीपालः प्रतिष्ठानपुरे पुरा। इति वाचस्पत्ये।

**ततोऽयुतं (10000) लक्षचतुष्टयं क्रमात्**
**धरादृगष्टाविति शाकवत्सराः।। इति।।**

एवं च क्लेश्चतुश्चत्वारिंशदुत्तरषट्शतमितेषु व्यतीतेषु श्रीविक्रमार्कशकोपक्रम इति सिद्धम्। सम्प्रति तु व्यतिक्रान्तानि कलेर्द्व्यधिकपञ्चसहस्रवर्षाणि एतेभ्य उपरिनिर्दिष्टकलिवत्सरव्यकलनायामवशिष्टा अष्टपञ्चाशदुत्तरोनविशंतिशताब्दाः। एत एव च श्रीविक्रमार्कशकारम्भतोऽद्यावधि व्यतिगताः संवत्सराः। ततश्च सुस्पष्टमेव ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वं श्रीमतो विक्रमादित्यस्येतिं।

सुभाषितसन्दोहे चामितगतिनामा जिनपरिव्राजकः प्राह।

**समारूढे पूतत्रिदिववसतिं विक्रमनृपे**
**सहस्रे वर्षाणां प्रभवति च पञ्चाशदधिके।**
**समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ**
**सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम्।।** इति।।

एतेन च श्रीमन्मुञ्जनृपावस्थानावसरे विक्रमक्षितिपतेः स्वर्गारोहणमारभ्य पञ्चाशदधिकं वत्सरसहस्रमेवातिक्रान्तमिति बोध्यते। मुञ्जश्च ख्रिस्तीयैकादशशताब्द्यामासीदिति प्रतिपादितपूर्वमेवेदमस्माभिः सप्रमाणं श्रीधनञ्जयकवेश्चरिते तेनापि श्रीविक्रमादित्यस्य ख्रिस्तीयवत्सरारम्भतोऽपि प्राचीनत्वं सिध्यतीत्यलं बहुना।

विदितमेव चैत्पुरावृत्तविदां यद्भगवतः परमपावनस्य श्रीमतो रघुपुङ्गवस्य पुत्रप्रकाण्डेन श्रीमता लवदेवेन शरावती नामात्मनो राजधानी निरमायि। यामेव च श्रावस्तीत्यपि व्यवहरन्ति प्रज्ञाः। इयमेव च जन्मभूमिर्बुद्धदेवस्येति सुप्रथितं बौद्धप्रबन्धेषु। तत्र च ख्रिस्तीयवत्सरारम्भतः पूर्वं सप्तपञ्चाशे वत्सरे विद्यमानं कमपि बौद्धभूपालं पराजित्यात्मसाच्चकारायोध्यां तत्र भवान्विक्रमादित्यः। एतेनापि श्रीमतो विक्रमादित्यस्य ख्रिस्तीयवत्सरोपक्रमात्प्राचीनत्वमर्थादेव संसिध्यतीति द्रष्टव्यम्।

अवसरे त्वस्मिन्भारतं वर्षमलङ्कुर्वाणस्य महीपतेः श्रीविक्रमादित्यस्योज्जयिनी नाम नगर्येव राजधानी बभूवेति राजस्थानेतिहासादिभिर्यद्राजधान्युज्जयिनी महापुरीत्यादिभिश्च वचनैः शक्यते निर्णेतुम्।

महाकविः श्रीकालिदासोऽपि ख्रिस्तीयवत्सरारम्भतः प्राक्प्रथमशताब्द्यामेव धरणिमण्डलं मण्डयामासेति प्रतिपादितमेवास्माभिः सप्रमाणं प्राक्। यथा चायमुज्जयिन्यामेव न्युवासेति सिध्यति तथाऽनुपदमेव तदीयैरेव वचनैः साधयिष्यामः। एवं चैकस्मिन्नेवावसर एकत्रैव नगरे विराजमानयोः कविपुङ्गवसहृदयभूपालयोः परस्परसम्बन्धस्य नास्त्येवांशतोऽपि सम्भावनेति नैतत्कथञ्चिदपि भाषितुं शक्यम्। अत एव चालञ्चकार श्रीमतो विक्रमादित्यस्य परिषदं तत्रभवान्कालिदास इति लोकप्रवादो नैकान्ततो निरालम्ब इति सर्वमनवद्यम्।

**इति श्रीविक्रमादित्यविचारः।**

# Bibliography


Ānandavardhan, *Dhvanyāloka*, ed. with Abhinavagupta's *Locan* by Pattabhiram Shastri, Benares, 1940.

*Amarakosha*, Varanasi, 1978.

Apte, R.N., *Date of Kālidāsa*, Poona, 1891.

Banerji, *Kālidāsa Kosha*, Varanasi, 1968.

Basham, A.L., *The Wonder that was India*, London, 1967.

Belvalkar, S.K. (ed.), *The Abhijñana Shākuntala*, New Delhi, 1965.

Bhāmaha, *Kāvyālankara*, Tanjore, 1927.

Dandin, *Kāvyādarsha*, Calcutta University, 1931.

De, S.K. (ed.), *The Meghadūta*, New Delhi, 1957.

Dhananjaya, *Dasharūpaka* with *Avaloka*, Bombay, 1927.

Jagannātha, Paṇḍitarāja, *Rasagangādhara*, Kāvyamala, 1939.

Kālidāsa, *Abhijñāna Shākuntalam, Kumārasambhavam, Mālavikāgnimitram, Meghadūtam, Raghuvaṁsham, Vikramorvashīyam, Ṛtusamhāra.*

Keith, A.B., *A History of Sanskrit Literature*, I ed., London, 1920.

Mahimabhaṭṭa, *Vyaktiviveka*, Chowkhamba, 1936.

Mammaṭa, *Kāvyaprakāsha*, Poona, 1965.

Nerurkar, V.R. (ed.), *The Ṛtusamhāra*, Bombay, 1966.

Paniskar, W.L. (ed.), *The Raghuvaṁsha*, Bombay, 1916.

Paniskar, W.L. (ed.), *The Kumārasambhava*, Bombay, 1927.

Parab, K.P. (ed.), *The Mālavikāgnimitra*, Bombay, 1935.

Rudraṭa, *Kāvyālankāra*, Bombay, 1928.

Sharpe, A., *Kālidāsa Lexicon*, Vol. I, Pt. I-III, Brugge, 1958.

Shukla, H.L., *A Comprehensive Dictionary of Kālidāsa*, Allahabad, 1980.

Shukla, H.L., *The Literary Semantics of Kālidāsa*, Delhi, 1987.

Turner, R.L., *A Comprehensive Dictionary of the Indo-Aryan Languages*, Oxford, 1966.

Vāmana, *Kāvyālankārasūtravṛtti*, Calcutta, 1922.

Velankar, H.D. (ed.), *The Vikramorvashīya*, New Delhi, 1965.

Warder, A.K., *Indian Kavya Literature*, Delhi, 1972, 1973.

**H.L. Shukla** (1939- ) has created, and for forty years he has dominated the field of Indology and modern linguistics. By any criterion Shukla's achievement is vast : he has published about seventy books and hundreds of articles. His mastery of a huge literature is awe-inspiring : in current affairs, in linguistics, history, archaeology, anthropology, sociology, psychology, folklorology. He doesn't believe in heroes, but it is not surprising that for many he has become one. And there can be little disagreement that he has fulfilled his expressed hope that "I've done something decent with my life."

Dr. Shukla served as Professor and Head of Department of Languages and Culture at Barkatullah University, Bhopal, Madhya Pradesh. Currently he is engaged in *Cultural Thesaurus of India.*

**Rs. 2500 (Set of 2 Vols.)**